# चन्दमामा

सम्पुट : २७ अक्टूबर् - २००० सञ्चिका - ७



## अन्तरङ्गम्

**कथा :**



Printed and Published by B. Viswanatha Reddi at B.N.K Press Pvt. Ltd., Chennai–600 026 on behalf of Chandamama India Limited, Chandamama Buildings, Vadapalani, Chennai–600 026. Editor: Viswam

## एतस्य अङ्कस्य विशेषा :

श्रेष्ठतम: महात्मा (वेतालकथा)





कर्णभेदी गायक

प्रभूतं सुवर्णम्





भारत-गौरव-गाथा

Editor
VISWAM

Editorial Advisors
RUSKIN BOND
MANOJ DAS

Consultant Editor
K. RAMAKRISHNAN

ALL CORRESPONDENCE TO:
Chandamama Magazine Division
Chandamama Buildings
Vadapalani, Chennai–600 026
e-mail : chandamama@vsnl.com

MUMBAI OFFICE
2/B Naaz Buildings
Lamington Road
Mumbai-400 004
Phone: 022-388 7480
Fax: 022-3889670

**For USA**
**Single copy $2**
**Annual subscription $20**
*Mail remittances to*
**INDIA ABROAD**
**43 West 24th Street**
**New York, NY 10010**
**Tel: (212) 929-1727**
**Fax (212) 627-9503**



## Errata :

Bob Beamon was the first **long jumper** to break the 28-feet barrier. The record was **not** made in high jump, as was inadvertently mentioned as answer to Question 9 of Olympic Quiz in our September 2000 issue.

*संस्थापकौ -*

**चक्रपाणिः नागिरेड्डी च**

# उज्ज्वलभविष्ये विश्वासः भवतु

आ काश्मीरात् आकोयम्बत्तूरु प्रचलतः आतङ्कवादस्य कारणतः न ज्ञायते, कियन्तः मुग्धजनाः मरणं प्राप्तवन्तः इति । एषः आतङ्कवादः अद्यापि अनुवर्तते । पैशाचिककृत्यस्य एतस्य आतङ्कवादस्य निवारणार्थं देशे महतः धनराशेः जनशक्तेः च आवश्यकता अस्ति । सर्वकारेण, सर्वकारीयैः अधिकारिभिः च एतस्य आतङ्कवादस्य निवारणार्थं सुव्यवस्थिता काचित् कार्ययोजना करणीया । तथा कृतं चेदपि आतङ्कवादस्य निर्मूलनं न भवेत् इति भाति । यतः विश्वासघातकता एतस्य आतङ्कवादस्य पोषणं करोति । यथा स्पर्धाह्वानावसरे साहसप्रवृत्तिः एव जयकारणं भवति तथैव कस्याश्चित् नीतेः जयार्थम् अपि साहसप्रवृत्तेः मेधावितायाश्च आवश्यकता भवति । आतङ्कवादिनः सामान्यजनान् सार्वजनिकस्थलानि, सार्वजनिकयानानि च नाशयन्तः भीतिमयं परिसरं निर्मातुं प्रयतमानाः सन्ति । भीरवः ते ।

भारते यः आतङ्कवादः दृश्यते तस्य पोषणम् अर्थसाहाय्यं च विदेशीयसङ्घटनैः क्रियते इति तु करतलामलकम् इव सुस्पष्टम् । तानि विदेशीयसङ्घटनानि भारतस्य शान्तिं सुरक्षां च न सहन्ते । आतङ्कवादस्य सम्मुखीकरणार्थं महत् आत्मबलम् आवश्यकम् । तच्च आत्मबलं राष्ट्रभक्तितः वर्धते । शान्तिसमन्वयादयः भारते सहजाः आसन् । विश्वशांन्तिः भारतात् एव साध्या ।

भारतस्य उज्ज्वलं भविष्यं सर्वे यथा इच्छेयुः तथा प्रयासः करणीयः । भारतं कदापि आतङ्कवादस्य पुरतः अवनतं न भवेत् । वयम् आत्मविश्वासेन धैर्येण शौर्येण च आतङ्कवादं सम्मुखीकुर्याम ।

# वार्ताविशेषाः

## युद्धसमाप्तिगोष्ठ्याः स्मरणार्थम्...




१९३९ तमे वर्षे द्वितीयजागतिकयुद्धस्य आरम्भः जातः । तत्काले जर्मनी, इटली, जपान् इत्यादीनां देशानां कृते सोवियत्सङ्घः शक्तिस्तम्भः इव आसीत् । ब्रिटन्, फ्रान्स्, संयुक्तराष्ट्र-अमेरिका इत्यादयः तदा मित्रदेशत्वेन निर्दिश्यन्ते स्म । आदौ एतैः देशैः महती हानिः अनुभूता । नाजीनेता हिट्लरः पोलेण्ड्-जकोस्लोवाकिया-प्रभृतीन् देशान् मेलयित्वा सोवियत्सङ्घस्य प्रभुत्वं प्राप्तुं कञ्चित् असफलं प्रयत्नं कृतवान् । किन्तु अग्रिमकाले सोवियत्-सङ्घः मित्रदेशानां गणे अन्यतमः जातः । मित्रराष्ट्राणां नेतारः ब्रिटनीयः विन्सण्ट्चर्चिलः, अमेरिकीयः हैरी एस्. ट्रूमनः, सोवियत्सङ्घीयः जोसेफ् स्टालिनः च एकस्यां चर्चागोष्ठ्यां भागम् अवहन् । सा चिन्तनगोष्ठी एव युद्धसमाप्तेः कारणम् आसीत् । अतः रशियन्केन्द्रीयवित्तकोषः ताम् एतां गोष्ठीं स्मारयितुं शतरूबलात्मकं नाणकं प्राकाशयत् । अद्यावधि ५०० नाणकानां वितरणं जातम् अस्ति । वस्तुतः तत् नाणकम् अत्यमूल्यकम् अपूर्वं च ।

## कारणात् पूर्वम् एव प्रभावः...



अद्य यावत् विश्वस्यते स्म यत् प्रकाशवेगः एव महत्तमवेगः इति । प्रतिपलं प्रकाशः १८६००० मैल्वेगेन सञ्चरति । किन्तु अयं विश्वासः अद्य परिवर्तनीयः अस्ति । अमेरिकादेशीयः एन्. ई. सी. शोधसंस्थानस्य वैज्ञानिकः डा॰ बाँगः संशोधनद्वारा निरूपितवान् अस्ति यत् प्रकाशवेगः ३००% परिवर्धयितुं शक्यः इति । तदा तु प्रकाशः आधारपरित्यागं यावत् न करोति ततः पूर्वम् एव तस्य प्रभावः भूमौ दृष्टः भविष्यति !! एतस्मात् भौतशास्त्रसिद्धान्तः एव परिष्करणीयः स्यात् । 'कारणप्राप्तितः पूर्वम् एव परिणामः उत्पद्यन्ते' इति लेखनीयं स्यात् । अतः ऐनस्टिनस्य 'रिलेटिविटी'-सिद्धान्तः एव अद्य कम्पमानः अस्ति ।

## लेखनदोषार्थम्....



रशियादेशे कश्चन विद्यालयः आप्रच्छनसमारम्भार्थं राष्ट्रपतये एकं निमन्त्रणपत्रम् अप्रेषयत् । तत्र दोषद्वयं दृष्टम् । प्रथमदोषः तावत् - 'Esteemed Vladimir Patin' इत्यत्र सम्बोधनसूचकम् आश्चर्यचिह्नम् (!) न आसीत् इति । द्वितीयः दोषः - You will have a good time, we will feed you pies' इत्येतस्मिन् वाक्ये 'you' शब्दस्य प्रथमाक्षरं 'केपिटल्' (Y) न आसीत् इति । एतयोः दोषयोः दर्शनात् राष्ट्रपतिकार्यालयीयाः क्रुद्धाः । 'आप्रच्छननिमित्तके नृत्यकार्यक्रमे भागः न वोढव्यः' इति ते राष्ट्रपतिम् असूचयन् । तावदेव न, पत्रं कया लिखितम् इत्यपि तैः अन्विष्टम् । १७ वर्षीया 'ऐना प्रोवरोवा' एतत् पत्रं लिखितवती आसीत् विद्यार्थिप्रतिनिधित्वेन । पत्रं यद्यपि तया लिखितं, किन्तु पत्रे तस्याः हस्ताङ्कनं (Signature) न आसीत् । अधिकारिणः आज्ञापितवन्तः यत् तस्यै रजतपदकं न दातव्यम्, तया अर्जितेषु अङ्केषु न्यूनता करणीया इति । तस्याः विद्यालयः राज्यस्य उच्चाधिकारिणः निवेदितवान् अस्ति यत् ऐनां दण्डनात् विमुच्य तस्यै अङ्कः पदकं च देयम् इति ।

## ब्राड्सनः एव ब्राड्मनः....




'ब्राड्सनः' वस्तुतः 'ब्राड्मनः' एव । प्रसिद्धस्य क्रीडापटोः डोनाल्ड्ब्राड्मनस्य विषयं वयम् अत्र वदन्तः न स्मः, प्रत्युत तस्य पुत्रस्य विषयम् । तस्य पुत्रस्य नाम जान् । सः स्वनाम्ना सह ब्राड्सन् इति पदं योजयति स्म, न तु ब्राड्मन् इति कुलनाम । गतेषु ३० वर्षेषु तेन एवम् एव कृतम् । पत्रकारैः एतस्य कारणं पृष्टः सः अवदत् - ''मम पित्रा या प्रसिद्धिः आसादिता तया अहं बाधितः न भवेयम् इति विचिन्त्य मया एवं कृतम्'' इति । एषु दिनेषु आष्ट्रेलियादेशेन डोनाल्डब्रेड्मन्वर्यः 'गतशतकीयः श्रेष्ठः क्रीडापटुः' इति बिरुदेन सम्मानितः । पितुः प्रतिनिधित्वेन उपस्थितः जानः स्वस्य कुलनामगोपनरहस्यं सर्वेषां पुरतः उद्घाटितवान् । १९७२ तमवर्षानन्तरम् ऐदम्प्राथम्येन सः सार्वजनिकसभासु दृष्टिगोचरः जातः । सः सर्वदा लोकप्रसिद्धितः दूरे स्थातुम् इच्छति स्म ।

# एतन्मासे जातः महापुरुषः

## महात्मा गान्धिः



मोहनदास-करमचन्दगान्धिवर्यस्य जन्म गुजरात-राज्यीये पोरबन्दरनामके स्थले जातम् । तच्च एकं सामन्तराज्यम् । मोहनदासस्य पिता करमचन्दगान्धिः (काबागान्धिः इति नामान्तरम् ) पोरबन्दरराजस्य मुख्यमन्त्रित्वेन कार्यम् अकरोत् ।

मोहनदासस्य सामान्याध्ययनं यदा समाप्तं तदा तस्य पिता तं न्याय-शास्त्रस्य अध्ययनार्थं लण्डन्नगरं प्रति प्रेषितवान् । तत्काले मोहनदासः १८ वर्षीयः आसीत् । वर्षत्रयम् अध्ययनं कृत्वा ब्यारिस्टर्पदं प्राप्य सः भारतं प्रत्यागतः । कस्तूरबा तेन परिणीता ।

१८९२ तमे वर्षे सः दक्षिणाफ्रिकां गतवान्, यत्र च भारते इव आङ्ग्लशासनम् आसीत् । तत्र तेन आङ्ग्लानाम् अमानवीय-व्यवहारस्य अनुभवः प्राप्तः । कदाचित् रेल्यात्राकाले प्रथम-श्रेणीकचिटिकायुक्तः अपि सः यानप्रकोष्ठात् निष्कासितः, यतः तत्र उपविष्टः कश्चन आङ्ग्लेयः भारतीयेन सह उपविश्य प्रयाणं कर्तुं न इच्छति स्म । भारतीयानां विषये आङ्ग्लैः प्रदर्श्यमानां तिरस्कारदृष्टिं सोढुम् अशक्तः गान्धिवर्यः एतद्विरुद्धं कार्यं करणीयम् इति सङ्कल्पितवान् । न्यायक्षेत्रे स्वस्य यत् उत्कृष्टं ज्ञानम् आसीत् तत् उपयुज्य उज्ज्वलभविष्यं च पणीकृत्य सः न्यायिकव्यवहारम् आरब्धवान् । अन्यायं विरुध्य आफ्रिकादेशे अभियानम् आरब्धवान् च । तस्य अयं प्रयासः अविस्मरणीयः ।

१९१४ तमे वर्षे सः पुनः भारतम् आगतः । अफ्रिकादेशे तेन यत् कार्यं कृतं तस्य कारणतः तदीयं नाम भारते अपि सर्वैः ज्ञातम् आसीत् । चतुर्णां वर्षाणाम् अनन्तरं सः बिहारराज्ये चम्पारनजनपदे कृषिकान् सम्मेल्य सस्यवर्धकैः आङ्ग्लैः क्रियमाणम् अत्याचारं विरुध्य अहिंसात्मकम् अभियानम् आरब्धवान् । १९१९ तमे वर्षे पञ्जाबराज्ये जलियन्वालाबागक्षेत्रे आङ्ग्लेयैः निरपराधिनां जनानां निष्करुणहननं कुर्वद्भिः स्वस्य क्रूरता पुनरपि दर्शिता । अतः गान्धिवर्यः आङ्ग्लेयानां कृते सहकारदानं निराकृतवान् । एवं वर्षाभ्यन्तरे सः राष्ट्रिय-अभियानस्य नायकः जातः ।

सः भारतस्य सामाजिकस्थितेः उन्नत्यर्थं, निर्धनानां स्वावलम्बितार्थं चापि प्रयासम् आरब्धवान् । तदर्थं सः चरखा-यन्त्रेण तन्तुनिर्माणं करणीयं, 'खादी'वस्त्रम् एव धरणीयम् इति जनान् बोधितवान् । अस्पृश्यतानिवारणार्थम् अपि तेन प्रयासः कृतः । १९३० तमे वर्षे 'लवणसत्याग्रह'नाम्ना सः पादयात्रां साबरमतीतः दाण्डीपर्यन्तं कृतवान् । एतस्यां यात्रायां बहवः जनाः भागं गृहीतवन्तः । 'लवणनिर्माणार्थं सर्वकाराय करः दातव्यः नास्ति, समुद्रजलतः लवणस्य निर्माणार्थं जनानाम् अस्ति एव अधिकारः' इति सः प्रतिपादितवान् । ततः आरभ्य अद्यपर्यन्तं लवणनिमित्तं करः न गृह्यते ।

गान्धिवर्यः एतादृशानि अनेकानि आन्दोलनानि कृतवान् । तदा तदा कारागारवासः अपि तेन अनुभूतः । तेन १९४२ तमे वर्षे 'भारतं मुञ्चन्तु' इत्येतत् आन्दोलनं यत् स्वीकृतं तत् तु तदीयस्य राजकीयजीवनस्य महत्त्वपूर्णं पदम् । एतस्य परिणामतः आङ्ग्लेयैः भारतपरित्यागविषये चिन्तनम् आरब्धम् । १९४७ तमे वर्षे अगस्ट्मासस्य १५ दिनाङ्के भारतं स्वतन्त्रं तु जातम् । किन्तु तत् द्विधा विभक्तम् । केचन भावयन्ति यत् गान्धिवर्यस्य कार्यनीतेः परिणामतः एव एतत् विभजनं प्रवृत्तम् इति । १९३० तमे वर्षे जनवरीमासस्य ३० तमे दिनाङ्के कश्चित् विक्षिप्तचित्तः गोलकास्त्रप्रयोगेण तं मारितवान् । एवं तस्य इहलोक-व्यवहारः समाप्तः ।

गान्धिवर्यस्य भौतिकः देहः अद्य नास्ति, तथापि तदीयं नाम तु जनानां हृदयेषु अद्यापि सुस्पष्टं तिष्ठति । 'राष्ट्रपिता' इति तं कृतज्ञतापूर्वकं स्मरति लोकः ।



# वेताल-कथा

## श्रेष्ठतमः महात्मा

वेतालः कथमपि पराजेतव्यः एव इति विचिन्त्य त्रिविक्रमः पुनरपि वृक्षस्य समीपं गत्वा वृक्षम् आरुह्य शाखायां लम्बमानं शवं स्कन्धे आरोप्य अधः आगतवान् । ततः यथापूर्वं मौनेन श्मशानाभिमुखं प्रस्थितवान् च । स च श्मशानमार्गः कण्टकाकीर्णः आसीत् । रात्रिश्च घोरान्धकारमयी, वृष्टिमेघगर्जन-युक्ता, भूतप्रेत-पिशाचादीनां चीत्कारेण युक्ता, नितरां भयावहा च आसीत् । तथापि त्रिविक्रमः निर्भीतः सन् अग्रे गच्छन् आसीत् । यदा श्मशानम् आसन्नं तदा शवान्तर्गतः वेतालः अवदत् - ''अये



राजन् ! भवान् तु विशालस्य साम्राज्यस्य शासकः । भवतः राज्ये ज्ञानिनः, पण्डिताः, शास्त्रज्ञाः च बहवः स्युः एव । किन्तु भवता लक्षितम् एव स्यात् यत् ते सर्वे समानाभिप्रायवन्तः न भवन्ति इति । एकं विषयम् अधिकृत्य विविधाभिप्रायाः यदा प्रकाशिताः भवन्ति तदा राज्ञा जागरूकतया भवितव्यम् । युक्तियुक्तः अभिप्रायः एव तेन पुरस्करणीयः । कदाचित् राजास्थाने अल्पज्ञानवन्तः अयोग्याः जनाः अपि विशेषपुरस्कारं प्राप्नुवन्ति । ते यत् वदन्ति तस्य आदरः क्रियमाणः दृश्यते । नयसागरराजस्य आस्थाने वस्तुतः एवम् एव प्रवृत्तम् । पुरस्कारानर्हः अपि विश्वनाथः नाम पण्डितः राजास्थाने पुरस्कृतः जातः । भवता अपि तथा न करणीयम् इति उद्देशेन नयसागरविश्वनाथयोः कथां विस्तरेण श्रावयामि । श्रद्धया शृणोतु तावत्'' इति ।

अनन्तरं वेतालेन कथा आरब्धा -

प्राचीने काले नयसागरः नाम राजा भुवनगिरिराज्यं परिपालयति स्म । तस्मिन् राज्ये विश्वनाथः नाम कुलपतिः गुरुकुलं चालयति स्म । विश्वनाथः बहुशास्त्रपारङ्गतः आसीत् । 'अचिरात् एव आगत्य अहं द्रष्टव्यः' इत्येषः दूतद्वारा प्रेषितः राज्ञः सन्देशः कदाचित् विश्वनाथेन प्राप्तः । राजादेशं शिरसा वहन् विश्वनाथः शिष्येण कनकशर्मणा सह राजधानीं प्रति प्रस्थितवान् ।

सायङ्कालपर्यन्तं प्रयाणं कृत्वा काशीपुरनामकं ग्रामं प्राप्य कस्याश्चित् धर्मशालायां वसन्तौ तौ रात्रिं यापितवन्तौ । रात्रौ कनकशर्मणा एका आश्चर्यकरी वार्ता प्राप्ता । तां सः गुरुम् उक्तवान् ।

अनन्तरदिने तौ ग्रामात् बहिः स्थितं सरोवरं प्रति गतवन्तौ । तत्र महान् जनसम्मर्दः आसीत् । सर्वेषां दृष्टिः सरोवरमध्ये स्थिते सिकताराशौ लग्ना आसीत् । विचारणातः ज्ञातं यत् श्रावणपूर्णिमादिने प्रतिवर्षं स्वामी विमलानन्दः सरोवरमध्यतः प्रत्यक्षीभूय जनान् आशीर्वाददानेन अनुगृह्णाति इति ।

एतस्य दृश्यस्य दर्शनस्य अनन्तरं विश्वनाथः कनकशर्मा च राजधानीम् उद्दिश्य गतवन्तौ । मार्गे तौ अरण्यस्थे एकस्मिन् कुटीरे वसन्तौ द्वितीयां रात्रिं यापितवन्तौ । स च आश्रमः तपस्विनः शरभमुनेः । आश्रमस्य प्राङ्गणे विशाले होमकुण्डे अग्निः ज्वलति

स्म । आश्रमवासिनः उक्तवन्तः यत् श्वः प्रातः शरभमुनिः एतस्मिन् कुण्डे प्रवेशं करिष्यति, अतः एतत् सज्जीकृतम् इति ।

अनन्तरदिने प्रातः शरभमुनिः होमकुण्डं प्रविष्टवान् । घण्टां यावत् समाधिस्थितौ स्थित्वा कुण्डतः बहिः आगतवान् च । एतत् दृष्ट्वा सर्वे आश्चर्यचकिताः । होमकुण्डतः बहिः आगमनस्य अनन्तरं तस्य तपस्विनः शरीरं देवपुरुषस्य इव स्वर्णकान्त्या विराजते स्म । कनकशर्मा एतत् दृश्यं दृष्ट्वा नितरां सन्तुष्टः । 'एतस्य दर्शनतः मम जीवनं धन्यं जातम्" इति चिन्तितवान् सः ।

एतदनन्तरं तौ पर्वतान् नदीः च क्रममाणौ राजदुर्गनामकं ग्रामं प्राप्तवन्तौ । तस्य ग्रामस्य भूमिः शुष्का आसीत् ।



तस्मिन् वर्षे ग्रामे वृष्टिः अपि न जाता आसीत् । अतः ग्रामे क्षामः उत्पन्नः आसीत् । जनाः बुभुक्षया पिपासया च पीड्यमानाः आसन् ।

तदा रमेशः नाम युवकः कृषिकः ग्रामीणानां कष्टं निवारयितुं सङ्कल्पं कृतवान् । सः तरुणान् मेलयित्वा तेषु प्रेरणां पूरयित्वा आहारवितरणकेन्द्रम् आरब्धवान् । येषु ग्रामेषु समृद्धिः आसीत् तेभ्यः ग्रामेभ्यः आहार-पदार्थाः सङ्गृहीताः । वितरणकेन्द्रद्वारा ते च निर्धनेभ्यः वितीर्णाः ।

एतादृशे एव काले विश्वनाथः कनकशर्मा च तं ग्रामं प्रविष्टवन्तौ आस्ताम् । तयोः पुरतः एव काचित् निर्धना वृद्धा महिला बुभुक्षाकारणतः दिवङ्गता । तस्याः रक्षणार्थं रमेशेन बहुधा प्रयत्नः कृतः । तथापि सः तां वृद्धां रक्षितुं न शक्तः । वृद्धायाः मरणं दृष्टवतः रमेशस्य नेत्राभ्याम् अश्रुधारा निर्गता ।

विश्वनाथः रमेशस्य प्रयत्नान् कोमल-हृदयत्वं च प्रशंसन् उक्तवान् - ''रमेश ! ग्रामीणानां हितार्थं भवान् स्वस्य कष्टानि अपरिगणय्य निःस्वार्थभावनया अहोरात्रं कार्यं करोति यत् तत् तु नितरां श्लाघ्यम् । युवकानां प्रेरणास्त्रोतः जातः अस्ति भवान् । भवता क्रियमाणः कर्मयोगः महातपसः अपि श्रेष्ठतमः । मानवसेवा एव माधवसेवा'' इति ।

ततः सः रमेशम् अपृच्छत् - ''ग्रामस्य स्थितिं महाराजं निवेद्य राजकीयसाहाय्यं प्राप्तुं शक्यम् आसीत् खलु ? किमर्थं भवता तथा



न कृतम् ?'' इति ।

तदा रमेशः विनयेन अवदत् - ''वयं क्षामसम्भावनां ज्ञात्वा महाराजं वस्तुस्थितिं निवेद्य साहाय्यं प्रार्थितवन्तः । किन्तु देशे एतादृशाः क्षामग्रस्ताः ग्रामाः बहवः स्युः । सर्वेभ्यः ग्रामेभ्यः साहाय्यदाने क्लेशः स्यात् खलु ? अतः महाराजेन किमपि न कृतम्'' इति ।

रमेशः यद्यपि विनयेन उक्तवान् आसीत् तथापि तदीयं वचनं विषादम् अभिव्यञ्जयति स्म । एतत् जानन् अपि विश्वनाथः किमपि न उक्तवान् । गुरुशिष्यौ ततः राजधानीं प्रति प्रस्थितवन्तौ ।

राजधान्यां विश्वनाथं तच्छिष्यं च महता आदरेण स्वागतीकृतवान् राजा । विश्वनाथः मार्गे प्राप्तान् अनुभवान् महाराजं विस्तरेण निवेदयन् रमेशस्य ग्रामस्य स्थितिं, रमेशस्य प्रयत्नान् च उक्त्वा - ''तस्य ग्रामस्य कृते साहाय्यदानम् अवश्यं चिन्तनीयम्'' इति अभ्यर्थितवान् ।

विश्वनाथस्य कथनं समग्रं श्रुत्वा राजा अवदत् - ''न जाने, अस्माकं देशे कियन्तः महात्मानः सन्ति इति । तेषु श्रेष्ठतमः कः इति निर्णयः वस्तुतः कठिनः । श्रेष्ठतमः महात्मा कः इति ज्ञातव्यम् इति मम इच्छा । तदर्थम् अधिकारिभिः काचित् आवली सज्जीकृता अस्ति । तां भवते दास्यामि । तां परिशील्य भवान् एव श्रेष्ठतमं महात्मानं चिनोतु'' इति ।

विश्वनाथः राज्ञा दत्ताम् आवलीं परिशील्य अवदत् - ''महाराज ! एतस्याम् आवल्यां बहूनां महात्मनां नामानि सन्ति । ते सर्वे महात्मानः एव इत्यत्र नास्ति सन्देहः । किन्तु तेषु महात्मसु श्रेष्ठतमः वस्तुतः तु सः कृषिक-युवा रमेशः एव, यस्य नाम अत्र नास्ति । कर्मयोगी सः प्रजाहितार्थम् आत्मानम् एव समर्पितवान् अस्ति । श्रेष्ठतमस्य महात्मनः तस्य साहाय्यदानम् भवतः आद्यं कर्तव्यम्'' इति ।

वेतालः एवं कथाम् उक्त्वा अवदत् - ''महाराज ! राजा नयसागरः विश्वनाथं महापण्डितं सर्वशास्त्रकोविदं च मतवान् स्यात् नाम । किन्तु अहं चिन्तयामि यत् सः अज्ञानी युक्तायुक्तनिर्णये असमर्थः च इति । जले सञ्चारं कर्तुं समर्थम्, अग्निकुण्डे समाधिस्थितौ स्थातुं समर्थं च सः प्रयाणकाले

प्रत्यक्षं दृष्टवान् । तादृश्यः अपूर्वाः सिद्धयः तपोबलं च बहूनां वर्षाणां प्रयत्नस्य फलम् । एतस्मात् सिद्धं यत् ते सर्वे महात्मानः इति । कृषिकार्यं तु सामान्यम् । न तदर्थं तपोबलम् आवश्यकं, न वा प्रयत्नः । एतत् सर्वं जानन् अपि विश्वनाथः किमर्थं वा सामान्यं कञ्चित् अनुभवरहितं कृषिकं श्रेष्ठतममहात्मत्वेन परिगणितवान् ? किं सः अज्ञानी न ? युक्तायुक्तविवेकः तस्य अस्ति इति किं भवान् अभिप्रैति ? तस्य वचने राजा किमर्थम् आदरं प्रकाशितवान् ? किं राजा अपि अविवेकी ? मम एतेषां प्रश्नानाम् उत्तरं जानन् अपि यदि भवान् न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्'' इति ।

तदा मौनेन स्थातुं अशक्तः त्रिविक्रमः अवदत् - ''वेताल ! भवता सूक्ष्मचिन्तनं न कृतम् । भवान् हठयोगिनः विमलानन्दस्य, शरभमुनेश्च सिद्धिप्रदर्शनं श्रुत्वा व्यामुग्धः अस्ति सामान्यः जनः इव । शरभमुनिसदृशाः तपसा सिद्धिं प्राप्तवन्तः स्युः, किन्तु किं तेन ? तां सिद्धिं प्रदर्श्य सामान्यजनेषु आश्चर्यं जनयित्वा ततः स्वार्थं सम्पादयन्ति ते । स्वार्थसम्पादनार्थम् एव सिद्धिप्रदर्शनम् । यथा रमेशः निःस्वार्थभावनया अहोरात्रं परिश्रमं कृत्वा जनानां हितार्थं कार्यं कृतवान् तथा कदापि कर्तुं न शक्नुवन्ति ते सिद्धिप्रदर्शकाः । जनानां प्राणरक्षणादिकं कदापि न चिन्तयन्ति ते । यदि कदाचित् चिन्तयेयुः तर्हि अपि तादृशं कार्यं सर्वथा कर्तुं न शक्नुवन्ति ते । चमत्कारप्रदर्शनेन जनानां वशीकरणं, प्रसिद्धिसम्पादनम् इत्यादिषु एव आसक्तिः तेषाम् । एतादृशानां स्थित्या समाजस्य किं वा प्रयोजनम् ? मानवसेवा एव माधवसेवा इति रमेशेन यथा चिन्तितं तथा यदि देशे केचन चिन्तयेयुः तर्हि देशः सुसमृद्धः स्यात् । अतः रमेशः श्रेष्ठतमः महात्मा इत्यत्र नास्ति सन्देहः । एतत्सर्वं मनसि निधाय एव पण्डितः विश्वनाथः निर्णयं कृतवान् । विश्वनाथवर्यस्य एतादृशं निर्णयसामर्थ्यम् अस्तीत्यतः एव राजा तस्मिन् आदरं प्रकटितवान्'' इति ।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत् । अतः शवान्तर्गतः वेतालः ततः अदृश्यः भूत्वा यथापूर्वं वृक्षस्य शाखाम् अवलम्बितवान् ।





# कर्णभेदी गायकः

भीमतरङ्गिणीनामके राज्ये वीरभद्रः निवसति स्म । तस्य पत्न्याः नाम स्वर्णगौरी इति । विवाहस्य बहोः कालस्य अनन्तरम् अपि तौ सन्तानं न प्राप्तवन्तौ । अतः स्वर्णगौरी बहुविधानि व्रत-दान-पूजादीनि कृतवती । अन्ते दैवानुग्रहेण तया एकः पुत्रः प्राप्तः ।

सः बालकः जन्मसमये एव अतिसुन्दरः आसीत् । किन्तु तस्य रोदनध्वनिः कर्णकठोरः । पुत्रस्य एतं ध्वनिं श्रुत्वा स्वर्णगौरी आश्चर्यचकिता, भीता, चिन्ताक्रान्ता च । सा पतिम् आहूय सर्वं निवेदितवती । वीरभद्रः अपि पुत्रस्य रोदनध्वनिं श्रुत्वा महत् आश्चर्यम् अनुभूतवान् । सः एतत् अपि ज्ञातवान् यदा सः बालकः रोदनं करोति तदा गोष्ठे स्थिताः धेनवः अपि भीत्या कम्पन्ते इति । परन्तु वराकः सः किं वा कुर्यात् ? ''दैवेन यत् दत्तं तत् विना विरोधम् अङ्गीकरणीयम् । फलाफलं तु दैवाधीनम्'' इति वदन् पत्न्याः सान्त्वनं कृतवान् सः ।

बालस्य नाम राजशेखरः इति निश्चितम् । यथा यथा सः प्रवृद्धः तथा तथा तस्य कण्ठस्वरस्य कर्णकठोरता अपि प्रवृद्धा । यदि केनचित् कारणेन कुपितः सः रोदनं करोति तर्हि सः शब्दः तु कर्णौ नितरां पीडयति स्म ।

यदा सः पञ्चवर्षीयः जातः तदा तं गुरुकुलं प्रेषितवन्तौ मातापितरौ । तत्र तस्य कर्णकठोरशब्दं श्रुत्वा केचन बालाः भीताः, पुनः केचन भीत्या ज्वरग्रस्ताः जाताः ।

एतत्सर्वं दृष्ट्वा खिन्नः गुरुः वीरभद्रम् आहूय अवदत् - ''एषः यदि मम गुरुकुले वसेत् तर्हि अल्पे एव काले सर्वे छात्राः इतः निर्गच्छेयुः, गुरुकुलं च छात्रविहीनं स्यात् । अतः एतम् इतः नयतु कृपया'' इति ।

एतत् श्रुत्वा वीरभद्रः चिन्ताक्रान्तः जातः । विद्यालयं प्रति राजशेखरस्य प्रेषणं स्थगितवान् सः । किन्तु अग्रे किं करणीयम् इति महती समस्या तस्य ।

कदाचित् शार्दूलपादः नाम कश्चन संन्यासी तं ग्रामम् आगतवान् । महात्मा सः अपूर्व-

शक्तिशाली इति वार्ता सर्वत्र श्रूयते स्म । वीरभद्रः स्वपुत्रं तस्य समीपं नीत्वा विनयेन अवदत् - ''एषः मम पुत्रः । देवः एतस्मै कर्णकठोरं स्वरं दत्तवान् अस्ति । पाठशालां गतस्य एतस्य स्वरस्य कठोरतां श्रुत्वा सहपाठिनः भीताः ज्वरग्रस्ताः च जाताः । अतः गुरुः पाठशालां प्रति एतस्य आगमनं निराकृतवान् । विद्याभ्यासं विनैव एतस्य दिनानि गच्छन्ति । कृपया मया किं करणीयम् इति सूचयतु भवान्'' इति ।



संन्यासी शार्दूलपादः बहुकालपर्यन्तं राजशेखरस्य हस्तरेखाः परीक्ष्य अवदत् - ''एतस्य विंशतितमे वयसि भाग्योदयः भविष्यति । एतस्य गानतः अपूर्वं कार्यं सिद्धं भविष्यति । ततः एषः लक्ष्मीवान् भविष्यति । भवान् निश्चिन्तः भवतु'' इति ।

'कठोरस्वरः अयं मम पुत्रः कथं वा गायकः भवेत् ?' इति सन्देहः उत्पन्नः वीरभद्रस्य मनसि । तथापि संन्यासिनः वचने विश्वासं कुर्वन् सः निर्णीतवान् यत् अहं पुत्रं सङ्गीतशिक्षकसमीपं प्रेषयिष्यामि इति ।

पार्श्वग्रामे अमृतपाणिः नाम कश्चन प्रसिद्धः सङ्गीतविद्वान् आसीत् । पुत्रं तस्य गृहं नीत्वा उक्तवान् वीरभद्रः - ''महोदय ! मम पुत्रः सङ्गीते विशेषासक्तिं दर्शयति । अतः एतं शिष्यत्वेन अङ्गीकृत्य सङ्गीतं बोधयतु । प्रतिफलरूपेण यत् मया दातव्यं तत् अहं दास्यामि'' इति ।

गुरुः एतत् अङ्गीकृत्य कस्यचित् पद्यस्य एकां पङ्क्तिं गीत्वा राजशेखरम् अवदत् यत् मया यथा गीतं तथैव भवान् अपि गायतु इति । राजशेखरः यदा आलापनम् आरब्धवान् तदा मेघगर्जनसदृशः कर्णकठोरः ध्वनिः उत्पन्नः । तदा अमृतपाणिः हस्तेन बालकस्य मुखं पिधाय - ''वत्स ! अहो सङ्गीतनैपुण्यं भवतः ! भवान् बालः । अतः पादौ न गृहीतौ मया । अहं दुर्बलहृदयः अस्मि । यदि भवता सङ्गीतं स्थगितं न क्रियते तर्हि मम हृदयस्पन्दनं स्थगितं भवेत्'' इति प्रार्थयत ।

तदा राजशेखरः कोपेन - ''मध्ये त्यागः मह्यं न रोचते'' इति उक्त्वा पूर्णतया गीतवान् । तस्य गानस्य समाप्तेः अनन्तरम् अमृतपाणिः - ''वत्स ! वस्तुतः सङ्गीतशिक्षणं भवते न आवश्यकम् एव । कर्णः यथा कवच-कुण्डलाभ्यां सह जातः तथैव भवान् अपि



सङ्गीतप्रतिभया सह जातः । सङ्गीताभ्यासस्य आवश्यकता सर्वथा नास्ति भवतः'' इति अवदत् ।

वीरभद्रः अमृतपाणेः उपहासमिश्रित-वचनस्य तात्पर्यम् अवगतवान् । किन्तु मुग्धः राजशेखरः तु चिन्तितवान् यत् गुरुः मम प्रशंसां कृतवान् इति ।

गृहं प्रत्यागतः वीरभद्रः पुत्रम् अवदत् - ''भवतः गानकौशलम् अद्भुतम् अस्ति । किन्तु भवतः प्रतिभां दृष्ट्वा ग्रामजनाः असूयां प्राप्नुवन्ति । अतः भवान् ग्रामात् बहिः निर्जने स्थले उपविश्य गानस्य अभ्यासं करोतु'' इति ।

राजशेखरः पितुः वचनम् अनुसरन् ग्रामात् बहिः स्थिते पर्वतशिखरे उपविश्य गानम् आरब्धवान् । यदा यदा समयः प्राप्यते तदा सः पर्वतशिखरे उपविश्य गायति स्म । एवम् एव वर्षाणि गतानि ।

एकदा तद्ग्रामीणः निर्मलाचार्यः औषध-मूलानि आनेतुम् अरण्यं गतवान् । सः अकस्मात् मेघगर्जनसदृशं ध्वनिं श्रुतवान् । आश्चर्यचकितः सः इतस्ततः दृष्टवान् । परितः दर्शनात् सः पर्वतशिखरे उपविश्य गायन्तं राजशेखरं दृष्टवान् । सः राजशेखरसमीपं गत्वा अवदत् - ''वत्स ! दूरतः भवतः गानं श्रुत्वा अहं चिन्तितवान् यत् गन्धर्वगानं श्रूयते इति । एतत् गन्धर्वगानं कुतो वा भवान् अस्य देशस्य महाराजं न श्रावयेत् ? अहं चिन्तयामि यत् भवतः गानं श्रुत्वा राजा अवश्यं सम्माननं करिष्यति'' इति ।

सरलः राजशेखरः अर्चकस्य वचनं सत्यम् इत्येव चिन्तितवान् । अतः सः अनन्तरदिने एव गृहे कमपि अनुक्त्वा राजधानीं प्रति प्रस्थितवान् ।

तत्समये राजा प्रभातगुप्तः सङ्कटग्रस्तः आसीत् । गुप्तचरैः वार्ता आनीता आसीत् यत् प्रतिवेशिराजः मार्तण्डः सेनया सह आक्रमणार्थम् आगच्छन् अस्ति इति । एतां वार्तां श्रुत्वा राजा दिग्भ्रान्तः । यतः तस्य सैन्यं युद्धार्थं सज्जं न आसीत् । सेनापतिः व्याधिग्रस्तः सन् शय्याम् आश्रितवान् आसीत् अपि । अतः सः किङ्कर्तव्यतामूढः सन् उपविष्टवान् आसीत् ।

तदा कश्चन दूतः आगत्य निवेदितवान् यत् राजशेखरः नाम गायकः भवतः दर्शनम् इच्छति इति । राजा शिरः चालयित्वा

सूचितवान् - 'तं प्रवेशयतु' इति ।

राजशेखरः अन्तः आगत्य राजानं विनयेन नमस्कृतवान् । ततः राज्ञः पुरतः उपविश्य गानम् आरब्धवान् । 'स्वकीयेन गानमाधुर्येण राजा तोषणीयः' इति तस्य इच्छा आसीत् । अतः सः नेत्रे निमील्य महत्या तन्मयतया गानम् अनुवर्तितवान् । परन्तु तस्य स्वरस्य कठोरतां श्रुत्वा राजा भीतः । शत्रूणां सहस्रशः गोलकास्त्राणि युगपत् प्रयुज्यमानानि सन्ति किम् इति सः सन्देहं प्राप्तवान् । अन्तःपुरस्थाः चिन्तितवत्यः यत् भीमतरङ्गिणीनद्याः प्रवाहः वेगेन आगत्य प्रासादं प्रविशन् अस्ति इति ।



गानं श्रुत्वा क्रुद्धः राजा चिन्तितवान् यत् एतस्य जिह्वायाः कर्तनं वरम् इति । अनन्तरक्षणे राज्यस्य दक्षिणदिशि स्थिते अरण्ये वसन् राक्षसः तेन स्मृतः । 'यदि एषः तस्मिन् अरण्ये त्यज्यते तर्हि सः राक्षसः एतं खादेत्, तेन एतस्य पीडा परिहृता भवेत्' इति चिन्तयित्वा सः सैनिकान् आज्ञापितवान् यत् एतं कर्णभेदिनं गायकं राक्षसनिवासभूते तस्मिन् अरण्ये परित्यज्य आगच्छन्तु इति ।

सैनिकाः राज्ञः आदेशं शिरसा वहन्तः राजशेखरं राक्षसारण्ये परित्यज्य आगतवन्तः । एतावता राजशेखरः ज्ञातवान् आसीत् यत् मदीयः कण्ठस्वरः सर्वेषु भयं जनयति इति । अतः एव तस्य मनसि आत्मविश्वासः उत्पन्नः - 'अहं मम स्वर-कठोरताबलेन राक्षसे अपि भीतिं जनयितुं शक्नुयाम्' इति ।

अत्रान्तरे वृक्षशाखाः हस्तेन खण्डयित्वा पातयन्, शिलामयीं गदां स्कन्धे आरोप्य मदोन्मत्तः गजः इव घीङ्कारं कुर्वन् राक्षसः राजशेखरसमीपम् आगतवान् । राजशेखरं दृष्ट्वा सन्तोषेण - ''अहो, बहोः कालात् अनन्तरं कश्चन मानवः दृष्टिगोचरः जातः अस्ति'' इति वदन् उच्चैः हसन् वेगेन अग्रे आगतवान् ।

समीपे उपस्थितं राक्षसं दृष्ट्वा राजशेखरः सकृत् भीतः । अनन्तरक्षणे सः आत्मनि धैर्यं पूरयित्वा - ''अहो ! विधिविलसितं विचित्रम् ! एतस्य मरणम् अद्य मत्तः भविष्यति'' इति स्वगतम् उक्त्वा उच्चस्वरेण गानम् आरब्धवान् ।

गानश्रवणसमनन्तरम् एव राक्षसस्य गमनं स्थगितम् । तस्य पादौ कम्पमानौ जातौ । शिरसि वेदना च उत्पन्ना । सः भूमौ अपतत्

भीत्या । कथञ्चित् उत्थाय सः राजशेखरं प्रार्थितवान् - ''आर्य ! एतत् गानं स्थगयतु कृपया । मम कर्णौ स्फोटितौ भवतः'' इति ।

एतावता राजशेखरः ज्ञातवान् यत् राक्षसतः इतःपरं मम भीतिः नास्ति इति । 'राक्षसस्य पीडनार्थम् एषः सुसमयः' इति चिन्तयित्वा सः गानस्य स्वरस्य तारतां वर्धितवान् । क्षणकालं गानं स्थगयित्वा - ''अहं कर्णभेदी गायकः अस्मि । आरब्धं गीतम् आन्तं गायामि एव'' इति उक्त्वा सः पुनरपि उच्चैः गानम् अनुवर्तितवान् ।

राक्षसः एतत् गानं श्रोतुम् अशक्नुवन् अरण्यं प्रति धावितवान् । राजशेखरः गायन् एव तम् अनुसृत्य धावितवान् ।

एतस्मिन् एव समये मार्तण्डः सेनया सह प्रस्थाय भीमतरङ्गिणीदेशस्य वशीकरणार्थं तस्य अरण्यस्य समीपम् आगतवान् । धावनपूर्वकम् आगच्छन्तं पर्वताकारकं राक्षसं दृष्ट्वा ते सैनिकाः नितरां भीताः । मार्तण्डः अपि एतत् दृश्यं दृष्ट्वा भीतः । सः अचिन्तयत् - 'एतस्य देशस्य सामान्यः जनः कश्चन निरायुधः सन् अपि महाकाये राक्षसे भीतिं जनयित्वा तं धावयितुं समर्थः । एवं स्थिते अत्रत्यानां वीराणां सामर्थ्यं कीदृशं स्यात् ! निश्चयेन ते महाशूराः एव स्युः' इति । अतः सः अश्वस्य गमनं परिवर्त्य प्रतिप्रस्थितवान् । सेनाम् अपि आज्ञापितवान् यत् प्रतिगच्छन्तु भवन्तः इति ।

धावन् आगतः राक्षसः तु समीपम् आगतान् सैनिकान् शिलागदया प्रहरन् अग्रे धावति स्म । अतः मार्तण्डसैन्ये महान् हाहाकारः उत्पन्नः । राक्षसः आत्मरक्षणार्थं विन्ध्यापर्वते स्थिताम् एकां गुहां प्रविष्टवान् ।

गुप्तचराणां द्वारा राजा प्रवृत्तं समग्रं ज्ञातवान् । घोरः राक्षसः, प्रबलः शत्रुः च कर्णकठोरस्वरस्य कारणतः एव निवारितौ जातौ इति सः अवगतवान् । अतः सः राजशेखरम् आस्थानम् आनाय्य सत्कृत्य प्रभूतं धनं दत्तवान् । 'इतःपरं कदापि मया न गीयते' इति प्रतिज्ञां कृतवान् राजशेखरः राज्ञः अपेक्षायाः अनुसारम् । अतः तम् आस्थानस्य समुचिते उद्योगे नियोजितवान् राजा ।





# सुवर्णसिंहासनम्-९

*[मलयध्वजस्य कथां श्रावयित्वा द्वितीया सालभञ्जिका यान् प्रश्नान् अपृच्छत् तेषां समुचितम् उत्तरं दत्त्वा राजकुमारः विजयदत्तः सुवर्णसिंहासनस्य द्वितीयं सोपानम् आरोढुम् अर्हतां प्राप्तवान् । तदा न्यायप्रतिनिधिरूपा तृतीया सालभञ्जिका कथाम् आरब्धवती । सुभद्रदेशस्य राजा न्यायवर्धनः स्वस्य न्यायनिष्ठया प्रसिद्धः जातः आसीत् । तस्य आस्थाने अदण्ड्यः न दण्ड्यते स्म, दण्ड्यश्च न त्यज्यते स्म । कदाचित् वीरः नाम कृषिकः आगत्य उक्तवान् - 'चन्द्रः मम मित्रम् । तस्य एका पुत्री । मम एकः पुत्रः । तयोः बाल्ये एव निर्णीतम् आसीत् यत् चन्द्रपुत्री मम पुत्राय दातव्या इति । इदानीं चन्द्रः धनिकः जातः अस्ति, अहं च निर्धनः । अतः चन्द्रः स्वपुत्रीं मत्पुत्राय दातुं न इच्छति' इति । वीरस्य वचनं श्रुत्वा राजा चन्द्रं पृष्टवान् - 'एतद्विषये भवतः आशयः कः ?' इति । तदनन्तरम्......]*

चन्द्रः विनयेन महाराजं प्रणम्य अवदत् - ''प्रभो, वीरः मद्विषये यत् उक्तवान् तत् सत्यम् एव । किन्तु सः स्वस्य पक्षस्य समर्थनार्थं तत् सत्यम् असत्येन मिश्रीकृत्य भवतः पुरतः उपस्थापितवान् । तस्य कथनस्य श्रवणात् भासते यत् अहं दोषी अस्मि, तद्विषये महत् अन्याय्यं कृतं मया इति ।

आवयोः मैत्री आ बाल्यात् अनुवर्तते इति तु सत्यम् एव । तस्य पुत्राय मत्पुत्र्याः दानं मया अङ्गीकृतम् आसीत् इत्यपि सत्यम् । किन्तु स च विवाहप्रस्तावः मया निराकृतः यत् तस्य कारणं तदीयं निर्धनत्वं, मम धनिकत्वं च इति सः यत् वदति तत् सर्वथा मिथ्या । वस्तुतः आवयोः कुटुम्बस्य जीवन-शैली एव विवाहप्रस्तावनिराकरणस्य मूलं कारणम् ।



मम पत्नी जानकी परिश्रमशीला, बुद्धिमती, कुटुम्बस्य हितकाङ्क्षिणी च । अहं यावत् सम्पादयामि तावतः अर्धभागं सा गृहार्थं व्ययीकुर्वती अवशिष्टम् अर्धभागं सञ्चिनोति । विरामसमये पर्पटादीन् निर्माति सा । धनिकानां गृहं प्रति कार्यार्थम् अपि गच्छति । स्वपरिश्रमेण, सञ्चयेन च सङ्गृहीतं धनम् ऋणरूपेण दत्त्वा वृद्धिं प्राप्य मूलधनं सा वर्धितवती । एवं परिश्रमेण बुद्धिमत्तया च व्यवहरन्ती सा कुटुम्बस्य आर्थिकस्थितिं प्रबलां कृतवती । मया अपि परिश्रमशीलता ततः एव प्राप्ता । आवयोः व्यवहारम् अनुकुर्वती मम पुत्री अपि परिश्रमशीला जाता । एवं वयं त्रयः अपि आलस्यं नाम्ना अपि अजानन्तः श्रमेण जीवन्तः परिवारस्य सुखं समृद्धिं च वर्धयितुं निरन्तरप्रयत्नं कुर्वन्तः स्मः ।

किन्तु वीरस्य गृहे अन्या एव स्थितिः । वीरस्य पत्नी कनका अलसा व्ययशीला च । पति-पुत्राणां निमित्तं पाककरणम् अपि क्लेशाय मन्यते सा । पाकादिषु वस्तूनि बहुधा व्यर्थीकरोति । मितव्ययं तु नाम्ना अपि न जानाति । पतिः मासे यावत् सम्पादयति तावत् शीघ्रम् एव व्ययीकृत्य - 'धनम् आनयतु' इति पतिं सर्वदा पीडयति । गृहस्य आयस्य वर्धनं कदापि न चिन्तयति । मातरम् अनुकुर्वन्तः तस्याः पुत्राः अपि अलसाः अपरिश्रमशीलाः च सञ्जाताः । मलिनं वस्त्रं धृत्वा ते ग्रामे इतस्ततः व्यर्थतया कालं यापयन्ति । धनसम्पादनं परिश्रमं वा ते कदापि न चिन्तयन्ति । कनका पुत्राणां परिष्कारविषये कदापि न चिन्तयति एव ।

अन्यगृहविषये अस्माकं चञ्चूप्रवेशः अनुचितः इति मत्वा वयं कानिचन वर्षाणि मौनेन स्थितवन्तः । किन्तु विवाहः ज्येष्ठानां पुरतः प्रतिज्ञातः आसीत् खलु ? अतः वयं भाविजामातरं सारङ्गं परिश्रमशीलं गुणान्वितं च कर्तुं प्रयासं कृतवन्तः । किन्तु सारङ्गः परिश्रमकरणात् पलायते स्म । तदीया माता अपि पुत्रस्य एतां प्रवृत्तिम् एव प्रोत्साहयति स्म । सा मम पत्नीम् एव निन्दन्ती वदति स्म यत् ऐश्वर्यमदकारणतः मम पुत्रं बलात् पीडयन्तः एते अपमानयन्तः सन्ति इति । 'एते मम पुत्रम् अस्मत्परिवारतः दूरीकर्तुं प्रयतमानाः सन्ति' इत्यपि दोषारोपणं कृतवती सा । एवम् अस्माकं सर्वान् प्रयत्नान्

व्यर्थीकुर्वती सा पुत्रम् अमार्गे एव अग्रे नीतवती ।

इदानीं सारङ्गः तु तरुणः जातः अस्ति । तथापि संस्कारवान् तु न । दुष्टैः तरुणैः सह वसन् धूमपानं च कुर्वन् मद्यं च पिबन् द्यूतेन समग्रं दिनं यापयति सः । एवं स्थिते अपि तदीयौ मातापितरौ तद्विषये औदासीन्यम् एव प्रदर्शयतः । तादृशाय अलसाय, दुर्व्यसन-दासाय सुशीला परिश्रमशीला मम पुत्री कथं वा दातुं शक्येत ? किं दिने दृष्टे कूपे सा मया पातनीया ? किम् अहं तस्याः जीवनं दुःखमयं कुर्याम् ? मम निर्णयः ग्रामज्येष्ठैः अपि अनुमतः । एतस्मात् अयं वीरः क्रुद्धः अस्ति । 'धनिकत्वम् एव पुत्र्याः अदानस्य कारणम्' इति मयि दोषम् आरोपयन् 'मत्तः धनं प्राप्य ग्रामप्रमुखः मदनुकूलतया निर्णयं श्रावयति' इति वदति एषः । धनिकत्वस्य पुत्र्याः अदानस्य च न कोऽपि सम्बन्धः । सारङ्गः निर्धनः इत्यतः अस्माकं तस्मिन् अनादरः सर्वथा नास्ति । यदि सः स्वव्यवहारं परिष्कुर्यात् तर्हि अद्यापि वयं तस्मै पुत्रीं दातुं सिद्धाः एव । किन्तु तस्मिन् परिष्कारचिह्नम् एकम् अपि न दृश्यते । अतः वयं तस्मै पुत्र्याः दानं निराकृतवन्तः । एषा वस्तु-स्थितिः'' इति ।

महाराजः चन्द्रस्य कथनं श्रद्धया श्रुतवान् । सः क्षणकालं तौ उभौ अपि परीक्षादृष्ट्या दृष्टवान् । चन्द्रः सामान्यं वस्त्रं धृतवान् आसीत् । किन्तु तत् स्वच्छं सुधृतं च आसीत् । किन्तु वीरस्य वस्त्रं मलिनं, छिन्नम्, अनासक्त्या धृतं च आसीत् । वीरस्य नेत्रयोः



भीतिः आतङ्कः च दृश्यते स्म ।

वीरः उद्वेगं प्राप्य किमपि वक्तुं यदा उद्युक्तः तदा महाराजः तं हस्तसङ्केतेन - 'शान्ततया तिष्ठतु' इति सूचयित्वा चन्द्रम् अपृच्छत् - ''इदानीं पुत्री कस्मै दीयते भवता ?'' इति ।

''महाराज ! अद्यावधि एतत् रहस्यरूपेण रक्षितम् आसीत् मया । किन्तु महाराजः भवान् एव पृच्छन् अस्ति इत्यतः मया वक्तव्यम् एव अभवत् । मम श्यालस्य पुत्रः कश्चन सारङ्गसदृशः एव अस्ति वयसा । सः सुशीलः योग्यः च । दुरभ्यासः कोऽपि नास्ति तस्य । मम पुत्री अपि तस्य परिणयम् अङ्गीकृतवती । सोऽपि एताम् इच्छति'' इति उक्तवान् चन्द्रः ।

चन्द्रस्य कथनं श्रुत्वा वीरः पुनरपि उद्वेगेन



किमपि वक्तुम् उद्युक्तः । तदा राजा तस्य प्रयत्नं निवारयन् - ''उद्वेगस्य क्रोधस्य वा न एतत् स्थानम् । उभयोः अपि कथनं मया श्रुतम् एव । अतः उभौ अपि शान्त्या उपविशताम्'' इति आदिशत् ।

एतदनन्तरं महाराजस्य आदेशं प्राप्य मणिकर्णः नाम विदेशीयः वणिक् स्वस्य व्यवहारं विवृतवान् - ''महाराज ! अहं सिंहद्वीपस्य नागरिकः अस्मि । मम पिता महावणिक् आसीत् । पितुः इच्छायाः अनुगुणम् अहं बाल्ये एव वाणिज्ये आत्मानं प्रवर्तितवान् । किन्तु पित्रा क्रियमाणे वाणिज्ये मम विशेषासक्तिः न आसीत् । अतः अहं मित्रैः सह अटन् कालं यापयामि स्म । किन्तु पिता आकस्मिकतया यदा दिवङ्गतः तदा मया अनन्यगतिकतया वाणिज्यभारः वोढव्यः एव अभवत् । पितुः मित्रैः वाणिज्ये साहाय्यं कृतम् । समुद्रवाणिज्ये मम महती आसक्तिः । किन्तु मम पिता, अन्ये हितैषिणः च 'तत् मास्तु' इति उक्तवन्तः आसन् । 'समुद्र-वाणिज्यात् एव शतगुणितः लाभः प्राप्यते, रोमाञ्चश्चापि' इति मम चिन्तनम् आसीत् । तच्च अयुक्तम् इति अद्य अनुभवबलात् ज्ञातवान् अस्मि ।

अहं मानवद्वीपे अल्पमूल्येन सुगन्ध-द्रव्याणि, नारिकेलानि, हस्तिदन्तनिर्मितवस्तूनि इत्यादीनि क्रीत्वा वणिजां नौकायां स्थापयित्वा प्रयाणम् आरब्धवान् । मध्येमार्गम् अपि अनेकानि वस्तूनि क्रीतानि । मार्गे कोऽपि विघ्नः न उत्पन्नः । एतदवसरे अहं निश्चयेन महान्तं लाभं प्राप्स्यामि इति चिन्तयतः मम मनः आनन्देन नृत्यति स्म ।

नौका अग्रे गच्छन्ती आसीत् । अत्रान्तरे सुभद्रदेशः प्राप्तः । तत्र सप्ताहं यावत् स्थित्वा वस्तूनि विक्रीय गन्तव्यम् इति नौकास्थाः वणिजः निर्णीतवन्तः । ते माम् उक्तवन्तः - ''अत्र भवता आनीतानि वस्तूनि उत्तममूल्येन विक्रीतानि भवेयुः । अतः अत्र विक्रयणं वरम्'' इति । मया आनीतानां वस्तूनां विक्रयणार्थं सप्ताहात्मकः कालः अपर्याप्तः भवति स्म । अतः ते एव वणिजः सूचितवन्तः यत् भाटकरूपेण सङ्ग्रहालयाः अपि अत्र प्राप्यन्ते वस्तूनि स्थापयितुम् इति ।

सभद्रदेशस्य नौकास्थानम् आसन्नं चेदपि मया किमपि न निर्णीतम् । मदीयानि वस्तूनि अत्र अवतारणीयानि उत न इत्येव अहं

चिन्तयन् उपविष्टवान् आसम् । तावता एषः रत्नगुप्तः मत्समीपम् आगतः'' इति वदन् मणिकर्णः रत्नगुप्तं हस्तसङ्केतेन सूचितवान् ।

महाराजस्य दृष्टिः यदा स्वस्य उपरि पतिता तदा रत्नगुप्तः उत्थाय महाराजं विनयेन नमस्कृतवान् ।

रत्नगुप्तः सुभद्रदेशस्य राजधान्यां वसन् कश्चन वणिक् । नगरस्य बुद्धिमत्सु अनुभविषु वणिक्षु अन्यतमः आसीत् सः । महाराजः तं सकृत् परीक्षादृष्ट्या दृष्ट्वा शिरः कम्पयित्वा मणिकर्णं सूचितवान् यत् भवान् स्वस्य कथनम् अनुवर्तयतु इति । मणिकर्णः कथनम् अनुवर्तितवान् -

''प्रभो, रत्नगुप्तः सुदक्षः वणिक् । सः मम द्वन्द्वभावं ज्ञात्वा अवगतवान् यत् समुद्र-वाणिज्ये अहम् अननुभवी इति । सः मत्समीपम् आगत्य स्वस्य परिचयम् उक्त्वा मम वाणिज्यविषये प्रश्नान् कृतवान् । अहं तस्मिन् विशेषविश्वासं प्रदर्शयन् मदीयं वाणिज्यव्यवहारं समग्रं तं निवेदितवान् । मया कृतः द्वितीयः दोषः अयम् ।

मत्तः समग्रं विवरणं प्राप्य सः माम् उक्तवान् - ''वत्स ! सप्ताहाभ्यन्तरे भवता आनीतानां सर्वेषां वस्तूनां विक्रयणं न सम्भवेत् । भवान् अन्यदेशीयः । अतः अत्रत्याः वणिजः भवन्तं वञ्चयेयुः । कस्य वस्तुनः किं मूल्यम् इति ज्ञानार्थम् एव कश्चन कालः आवश्यकः । भवद्दर्शनात् एव भवद्विषये मयि कश्चन स्नेहः उत्पन्नः अस्ति । अहम् अत्रत्यः वणिक् । मम सङ्ग्रहालयः सुविशालः अस्ति । भवान् मम सङ्ग्रहालये



वस्तूनि संस्थाप्य मद्गृहे अतिथिः इव वासं करोतु । वाणिज्ये अहम् अपि साहाय्यं करिष्यामि । भवान् विशेषलाभं यथा प्राप्नुयात् तथा मार्गं दर्शयिष्यामि'' इति ।

एतस्य मधुरवचनानि श्रुत्वा अहं नितरां सन्तुष्टः । भगवान् एव विशेषकृपया मम साहाय्यार्थम् एतं प्रेषितवान् इति अहं चिन्तितवान् । एतस्मिन् अल्पः अपि सन्देहः मम न उत्पन्नः । अहं नौकातः वस्तूनि अवतार्य एतदीयं सङ्ग्रहालयं प्रति नीतवान् । एषः स्वस्य सेवकानां द्वारा तानि सङ्ग्रहालये स्थापितवान् । ततः सङ्ग्रहालयप्रकोष्ठं कीलयित्वा कुञ्चिकां मह्यं दत्तवान् सः ।

एतत्सर्वं दृष्ट्वा अहं चिन्तितवान् - 'मम पितुः आत्मा एव एतस्मिन् स्थितः अस्ति ।



अतः एव मयि विशेषस्नेहं प्रदर्शयन् एषः सर्वविधसाहाय्यं कुर्वन् अस्ति' इति ।

स्नानादिनित्यकर्मणाम् अनन्तरम् उत्तमं भोजनं मह्यं तेन दत्तम् । श्रान्तिकारणतः अहं भोजनस्य अनन्तरं सायङ्कालपर्यन्तं शयनं कृतवान् । रात्रौ सत्कारव्याजेन एषः रत्नगुप्तः मां विलासमन्दिरं नीतवान् । तत्र सुन्दर्यः नर्तक्यः नृत्यं कुर्वन्ति स्म । दर्शकाः मदिरां पिबन्तः तालानुगुणं करताडनादिषु मग्नाः आसन् ।

एतादृशः परिसरः मम अपरिचितः तु न आसीत् । यदा मम पिता जीवति स्म तत्काले कदाचित् अहम् अपि विलासमन्दिरं गच्छामि स्म । किन्तु समग्रः वाणिज्यभारः यदा मदुपरि आपतितः तदनन्तरं तु मया कदापि तत्र न गतम् आसीत् । चिरकालानन्तरं तादृशे परिसरे स्थितम् आसीत् इत्यतः मम दौर्बल्यानि उद्बुद्धानि जातानि । अहं मदिरापाने नर्तनरसास्वादने च निमग्नः । किन्तु रत्नगुप्तः फलरसमात्रं पिबन् शान्ततया सर्वं परिशीलयन् वातावरणप्रभावतः सर्वथा विनिर्मुक्तः आसीत् । दीर्घकालं यावत् मया विलासमन्दिरे स्थितम् । तत्र यः व्ययः जातः तं रत्नगुप्तः एव निरूढवान् । मया एका वराटिका अपि न व्ययिता ।

ततः प्रत्यागमनसमये सः माम् अवदत् - ''मणिकर्ण ! आत्मना आनीतानां वस्तूनां विक्रयणार्थं भवता महान् श्रमः वोढव्यः भवेत् । अतः भवत्साहाय्यार्थम् एव अहं तानि क्रेष्यामि । यद्यपि भवता आनीतानि वस्तूनि मया इतः पूर्वं न विक्रीतानि, तथापि अन्यवणिजां साहाय्येन हानिं विना एतानि विक्रेतुं तु शक्नुयाम् एव । एतद्विषये भवतः अभिप्रायः कः ?'' इति ।

एतत् श्रुतवतः मम महान् सन्तोषः जातः । मदिराकारणतः अहं विशेषचिन्तनम् अकृत्वा तस्य प्रस्तावम् अङ्गीकृतवान् । गृहं गत्वा सम्यक् निद्रां कृतवान् च ।

प्रातः यदा उत्थितं तदा रात्रौ प्रवृत्तं समग्रं स्मृतिपथम् आगतम् । स्नानादीनाम् अनन्तरम् उपाहारसमये अहम् उक्तवान् - ''रत्नगुप्तवर्य ! मम साहाय्यार्थम् एव भवतः सर्वे प्रयत्नाः इति अहं जानामि । तथापि एकं प्रश्नं पृच्छामि - मम सर्वाणि वस्तूनि भवता एव किमर्थं क्रीयन्ते ? यदि भवान् एव तेषां विक्रयणं कालान्तरे चिन्तयेत् तर्हि तेषां मूल्यस्य



अर्धभागः इदानीं दत्तः चेत् वरम् अभविष्यत् । यतः मम हस्ते इदानीम् अधिकं धनं नास्ति'' इति ।

मम वचनं श्रुत्वा सः किञ्चित् असन्तोषं प्राप्य - ''एतावता अपि एतेषां वस्तूनां स्थानीयं मूल्यं किम् इति मया न विचारितम् । तथापि साहाय्योद्देशेन तेषां क्रयणं प्रतिज्ञातम् । अद्य विपणिं गत्वा तेषां स्थानीयमूल्यं ज्ञात्वा भवते कियत् दातव्यम् इति निश्चेष्यामि । इदानीं मत्समीपे दशसहस्त्रं रूप्यकाणि सन्ति । तानि स्थापयतु । सायम् अवशिष्टं धनं दास्यामि । धनं स्वीकृत्य एतस्मिन् पत्रे भवान् हस्ताक्षरं लिखतु । मम लिपिकारद्वारा अनन्तरकाले विवरणं लेखयिष्यामि'' इति अवदत् रत्नगुप्तः ।

एतदनन्तरं सः दशसहस्त्रं रूप्यकाणि दत्त्वा रिक्ते कागदे मम हस्ताक्षरं प्राप्तवान् । तदनन्तरं सः आदिनं वाणिज्यादिकार्येषु निरतः अभवत् । अहं च समययापनार्थं नगरे भ्रमणं कृतवान् । भ्रमणावसरे कुतूहलवशात् मया आनीतानां वस्तूनां मूल्यं विचारितम् । ततः ज्ञातं यत् मदीयवस्तूनां मूल्यम् अधिकम् अस्ति इति । दशगुणितमूल्येन एतानि विक्रेतुं शक्यानि अत्र इति मया अवगतम् । आसन्नस्य वसन्तोत्सवस्य कारणतः तेषां मूल्यवृद्धिः अपि सम्भाव्यते इत्यपि मया ज्ञातम् ।

रत्नगुप्ताय वस्तूनां दानतः पूर्वं मया मूल्यं न निश्चितम् आसीत् । 'एतत् सर्वथा अनुचितं जातम् । रत्नगुप्तः मदीयानां वस्तूनां कृते कियत् धनं ददाति इति न ज्ञायते । रत्नगुप्तः एतेषां वास्तविकं मूल्यं जानाति एव । तथापि मां वञ्चयितुम् एव सः मूल्यनिश्चयं न कृतवान्' इति अहम् अचिन्तयम् । सर्वे वणिजः उक्तवन्तः यत् सः विश्वासार्हः जनः इति । ततः मम मनः किञ्चिदिव आश्वस्तं जातम् ।

यदा अहं गृहं प्रत्यागतः तदा माम् एव प्रतीक्षमाणः रत्नगुप्तः अवदत् - ''भोः, एकाकी भवान् कुत्र गतवान् आसीत् ?'' इति ।

''अहं नगरे अटनार्थं गतवान् आसम्'' इति उक्त्वा मया कृतं मूल्यविचारणादिकं चापि उक्त्वा अपृच्छम् - ''रत्नगुप्तवर्य ! मदीयानां वस्तूनां निमित्तं भवता कियत् धनं दीयते ?'' इति ।

तदा रत्नगुप्तः आश्चर्यं प्रकटयन् अपृच्छत् - ''किम् एतत् मणिकर्ण ! चत्वारिंशत्सहस्त्रं

रूप्यकाणि मया दत्तानि एव । अतः आवयोः व्यवहारः प्रातः एव समाप्तः । एवं स्थिते इदानीं भवान् पृच्छति खलु - कियत् धनं दीयते इति ! किम् एतत् ? भवान् पानमत्तः तु न स्यात् खलु ?'' इति ।

एतत् श्रुत्वा अहम् आश्चर्येण स्तब्धः । मम मुखं विच्छायं जातम् । रत्नगुप्तः धनप्राप्तिसूचकं मद्धस्ताक्षरयुक्तं पत्रं दर्शितवान् । हस्ताक्षराङ्कनसमये तत् रिक्तम् आसीत् । इदानीं तु तत्र स्पष्टं लिखितं दृश्यते स्म यत् मदीयवस्तूनां पूर्णमूल्यरूपेण मया चत्वारिंशत्सहस्त्रं रूप्यकाणि प्राप्तानि इति । मया तु रत्नगुप्ते पूर्णविश्वासं कुर्वता हस्ताक्षरम् उल्लिखितम् आसीत् । पितृसदृशः एषः मां वञ्चयेत् इति स्वप्ने अपि न ऊहितम् आसीत् मया । वाणिज्ये विश्वासमात्रम् अवलम्ब्य अजागरूकतया व्यवहारः मूर्खतायै इति मया तदा अवगतम् । किन्तु किं तेन ? आत्मा एव बहुधा निन्दितः मया । कृतस्य विषये महान् पश्चात्तापः अपि अनुभूतः । एषः रत्नगुप्तः वञ्चनया मम सम्पत्तिं स्वायत्तीकृतवान् अस्ति इति मया जनानां पुरतः रोदनपुरस्सरम् उक्तम् । किन्तु केनापि मम वचनेषु विश्वासः न कृतः । मम पक्षः केनापि न समर्थितः । प्रत्युत, अहम् एव असत्यवादी वञ्चकः इति सर्वैः निर्णीतम् ।

महाराज ! सर्वत्र निराशां प्राप्य अहं भवत्सकाशम् आगतवान् अस्मि । मम आशा अस्ति यत् विदेशीयः असहायः वणिक् भवतः आस्थाने अवश्यं न्यायं प्राप्नुयात् इति । मदीयानि वस्तूनि मया प्रतिप्राप्यन्ते एव इति अहं विश्वसिमि ।

महाराज ! अन्यः अपि विषयः निवेदनीयः अस्ति मया । यस्मिन् प्रकोष्ठे मम वस्तूनि स्थापितानि आसन् तस्य या कुञ्चिका मत्सकाशे आसीत् सा अपि केनापि अपहृता अस्ति । इदानीं मम भाग्योदयः सर्वनाशः वा भवदधीनः अस्ति'' इति ।

एवं मणिकर्णः स्वपक्षविवरणं विस्तरेण निवेद्य मौनम् अवलम्बितवान् ।



# लक्ष्मीपूजा अन्यप्रकारिका

ओरिस्साराज्यं पूर्वम् उत्कलनाम्ना कलिङ्गनाम्ना च निर्दिश्यते स्म । एतत् राज्यं देवालयबहुलम् अस्ति । ते च देवालयाः स्ववैशिष्ट्येन अद्यापि जनमनांसि आकर्षन्ति ।

यथा देवालयाः विशिष्टाः तथैव ओरिस्साराज्यीयाः पूजाक्रमाः अपि विशिष्टाः । लक्ष्मीपूजा अत्र उदाहरणम् । 'मण'परिमाणकं तण्डुलमापनपात्रं तण्डुलैः आकण्ठं पूर्यते । अत्र लक्ष्म्याः आवाहनं क्रियते । मार्गशीर्षमासे प्रतिगुरुवासरे एतस्य पूजा भवति । गृहं स्वच्छीकृत्य गृहस्य पुरतः पूजास्थले च रङ्गवल्ली लिख्यते । एषा पूजा 'मणाबसा'नाम्ना निर्दिश्यते । पूजाकाले* महिलाः क्वचित् उपवासव्रतम् आचरन्ति ।

एतस्याः पूजापद्धतेः पृष्टभूमिकायां काचित् कथा एवं श्रूयते -

पुरीनगरीयः जगन्नाथः विष्णोः अवतार-भूतः । लक्ष्मीः तस्य पत्नी । मार्गशीर्षमासस्य कस्मिंश्चित् गुरुवासरे प्रातः 'मद्भक्ताः मां कथं पूजयन्ति ?' इति परिशीलयितुं सा निर्गता । श्रियानामिकया कयाचित् चाण्डालकुलीयया महिलया या पूजा क्रियते स्म तां दृष्ट्वा सा विस्मिता । अतः सा तस्याः गृहस्य पुरतः स्थितवती । जगन्नाथः तदग्रजः बलभद्रः च तेन मार्गेण गच्छन्तौ तां तत्र दृष्टवन्तौ । बलभद्राय लक्ष्म्याः एषः व्यवहारः न अरोचत । 'मन्दिरात् निर्गच्छतु इति तां वदतु' इति सूचितवान् बलभद्रः । अनन्यगतिकः जगन्नाथः तां तथैव सूचितवान् ।

लक्ष्मीः ततः यदा निर्गता तदा तस्याः सेवकाः अपि ताम् अनुसृतवन्तः । समस्तम् ऐश्वर्यम् अपि अपगतम् । तल-वेतालनामकौ लक्ष्म्याः विधेयसेवकौ जगन्नाथ-बलभद्रयोः रत्नखचितं पर्यङ्कम् अपि नीतवन्तौ । असहायाभ्यां जगन्नाथ-बलभद्राभ्याम् अनन्यगतिकतया भिक्षायाचनं करणीयम् अभवत् । लक्ष्म्याः अनुग्रहात् वञ्चिताः भवितुम् अनिच्छन्तः जनाः तयोः कृते भिक्षां न दत्तवन्तः । यदा तौ जलपानार्थं सरोवरं गतवन्तौ तदा तत्र जलम् अदृश्यताम् अगच्छत् ।

दीनौ तौ सहोदरौ अन्ते तां चण्डालकुलीयां महिलां भिक्षां याचितवन्तौ । तदा लक्ष्मीः दयया तयोः कृते पाकं सज्जीकृतवती, किन्तु आत्मानं तु न दर्शितवती । यदा भोजनं परिविष्टं तदा ताभ्यां ज्ञातं यत् एतत् लक्ष्म्या एव सज्जीकृतम् इति । तौ तां क्षमां याचित्वा निवेदितवन्तौ यत् स्वस्थानं प्रत्यागन्तव्यं कृपया इति । लक्ष्मीः एतत् अङ्गीकृतवती । नियमं च विहितवती यत् मम प्रसादः जातिभेदं विना सर्वेभ्यः वितीर्णः स्यात् इति । सा एव परम्परा अद्यापि अनुस्त्रियमाणा अस्ति । मार्गशीर्षमासे जगन्नाथ-देवालये विविधानां पूजाक्रमाणां द्वारा एषा कथा प्रतिवर्षं स्मर्यते ।




** दीपावलीकाले लक्ष्मीपूजा प्रचलति समग्रे देशे । किन्तु ओरिस्साराज्ये लक्ष्मीपूजा डिसेम्बर्मासे जनवरीमासे वा प्रचलिष्यति ।*

## ८. भारतभूमिः पवित्रतमा



नवरात्रविरामकालः सः । सन्दीप-चमेलीभ्यां यत् कथाभाण्डागारं प्राप्यमाणम् अस्ति तत् तयोः मित्रैः अपि ज्ञातम् आसीत् । विरामकाले अपि ताभ्यां यदा क्रीडितुं न आगतं तदा तैः आश्चर्यं प्राप्तम् । ततः शोधनात् तैः ज्ञातं यत् तौ केनचित् वृद्धेन सह आधिक्येन अटतः, तस्य कथनम् आसक्त्या श्रृणुतः च इति । एकस्मिन् दिने सहोदरौ रमाकिशोरौ नदीतीरं गच्छतः देवनाथ-चमेली-सन्दीपान् रहस्य-रूपेण अनुसृतवन्तौ । सन्दीपः चमेली च पितामहस्य कथनस्य श्रवणे तावत् आसक्तौ आस्तां यत् मित्रद्वयम् अनुसरति इत्ययम् अंशः अर्धघण्टां यावत् ताभ्यां न ज्ञातः एव । यदा देवनाथवर्यः कथां स्थगितवान् तदा भावं निरोद्धुम् अशक्नुवन् किशोरः अप्रयत्नेन एव अवदत् – 'अहो, अपूर्वा कथा !' इति । तदा त्रयः अपि परिवृत्य दृष्टवन्तः ।

मित्रयोः अनुसरणं सन्दीपचमेल्योः आश्चर्याय आसीत्, सन्तोषाय अपि आसीत् । तौ मित्रयोः परिचयं पितामहम् उक्तवन्तौ । देवनाथवर्यः मन्दहासं प्रकटयन् अवदत् – "मम पौत्रस्य पैत्र्याः च मित्रैः मेलनम् अद्यावधि किमर्थं न जातम् इति अहं चिन्तयन् आसम् । किशोर ! रमे ! मत्कारणतः मित्रयोः सहवाससुखात् भवन्तौ वञ्चितौ जातौ खलु ? तदर्थं क्षन्तव्यः अहम्"

इति ।

''क्षमायाचनमात्रेण दोषस्य परिहारः न भवति । दोषनिमित्तं दण्डनं स्यात् एव । कथाश्रावणसमये उपस्थातुम् आवयोः कृते अपि अनुज्ञा दातव्या तत्रभवता'' इति उक्तवती रमा ।

''एवम् ! मम श्रोतृगणः वर्धिष्यते ! एषः दण्डः अनुमन्यते मया'' - देवनाथवर्यः हसन् अवदत् ।

ततः निश्चितं यत् अनन्तरदिनतः कथासत्रे किशोर-रमयोः अपि उपस्थितिः भविष्यति इति । किन्तु तौ आगमनसमये जार्जं जूलीं चापि आनीतवन्तौ ।

सायङ्कालसमयः सः । ते सर्वे सन्दीपस्य मातापित्रोः प्रकोष्ठस्य पुरतः तृणमय्यां भूमौ उपविष्टवन्तौ । तावता ध्वनिवर्धकेन उच्चस्वरेण प्रसार्यमाणं चलच्चित्रसङ्गीतं तेषां कर्णौ अतुदत् ।

''दुर्गापूजानिमित्तम् एषः ध्वनिकोलाहलः स्यात्'' इति उक्तवान् किशोरः ।

''अन्येषां क्लेशस्य विषये सर्वथा अचिन्तनम् एतां प्रवृत्तिं पोषयति । आ प्राचीनकालात् एतादृशाः उत्सवाः प्रवर्तमानाः सन्ति एव । प्रतिवर्षं जनाः पूजां कुर्वन्ति स्म । गीतापाठादिद्वारा प्रार्थनाम् अपि समर्पयन्ति स्म । किन्तु तेषाम् एषः भक्ति-प्रकाशनक्रमः कमपि अन्यं कदापि न पीडयति स्म । किन्तु अद्य ध्वनिवर्धक-व्यवस्थायाः दुरुपयोगः प्रचलति । यदि



कदाचित् भवन्तः एतादृशानां कार्यक्रमाणाम् आयोजकाः भवेयुः तर्हि, तस्मात् कार्यक्रमात् कस्यापि पीडा यथा न भवेत् तथा जागरूकताम् अवलम्बेयुः'' इति अवदत् देवनाथवर्यः ।

''नवरात्रोत्सवाचरणस्य आरम्भः कदा कथं प्रवृत्तः ?'' इति कुतूहलेन पृष्टवती रमा ।

"तत् ज्ञातव्यं चेत् भवत्या सृष्ट्युत्पत्ति-कालः मनसि आकलनीयः । विविधेषु पुराणेषु सृष्ट्युत्पत्तिः वर्णिता दृश्यते । ब्रह्मा सृष्टिकर्ता इति वयं सर्वे जानीमः एव । तस्य पुत्रः दक्षः । सः ब्रह्मणः दक्षिणाङ्गुष्ठतः



जातः । सः एव देवासुरगन्धर्वसर्पादीनि भूतानि सृष्टवान् । ब्रह्मणः वामाङ्गुष्ठतः उत्पन्ना वीरिणी तस्य पत्नी । एवं तस्य पत्नी वामाङ्गुष्ठतः उत्पन्ना इत्यतः अद्यापि पत्न्यः पत्युः वामभागे एव उपविशन्ति प्रायः । दक्षप्रजापतेः ५० पुत्र्यः । तासु ४९ पुत्र्यः देवेभ्यः ऋषिभ्यश्च तेन दत्ताः । दक्षस्य कनिष्ठा पुत्री सती पितुः विरोधम् अपि अपरिगणय्य शिवं परिणीतवती । एतस्मात् दक्षः नितरां कुपितः ।

कदाचित् दक्षः कश्चित् महायागं सङ्कल्पितवान् । सः देवान् ऋषीन् च यागार्थं निमन्त्रितवान् । किन्तु शिवः तेन न निमन्त्रितः । पुत्री सती अपि न निमन्त्रिता । तथापि यागवार्तां श्रुत्वा सती पितृगृहम् आगतवती ।

प्रस्थानसमये शिवः ताम् उक्तवान् आसीत् - निमन्त्रणं विना गमनं न शोभते इति । तदा सतीदेवी - 'मातृगृहं प्रति गमनार्थं पुत्र्याः निमन्त्रणं न आवश्यकम्' इति उक्त्वा ततः निर्गतवती आसीत् ।

दौर्भाग्यवशात् , दक्षः पुत्र्याः दर्शनमात्रेण अवाच्यैः शब्दैः शिवस्य निन्दनम् आरब्धवान् । शिवस्य वेषभूषादिकं दारिद्र्यं च तेन निन्दितम् । 'भूतपिशाचादीनां स्वामी, श्मशानवासी, भस्मालङ्कृतदेहः, सर्पभूषणः सः शिवः आदरार्हः सर्वथा न' इति अनिन्दत् सः ।

पत्युः निन्दाम् अपमाननं च असहमाना सती यज्ञकुण्डे एव पतिता सती आत्महत्यां कृतवती । एतां घटनां दृष्ट्वा सर्वे दिग्भ्रान्ताः । सतीदेव्या सह आगतः भूतगणः झटिति कैलासं गत्वा शिवं प्रवृत्तं सर्वं न्यवेदयत् । एतस्मात् क्रुद्धः शिवः स्वजटया भूमिम् आघट्टितवान् । तस्मात् सहस्रबाहुः वीरभद्रः समुत्पन्नः ।

वीरभद्रः शिवस्य इङ्गितम् अवगत्य यागस्थलं गत्वा मण्डपस्य ध्वंसनं कृतवान् ।

अतिथीन् ऋत्विजः च कोपेन अपसारितवान् । तावता तत्र आगतः शिवः स्वस्य त्रिशूलेन दक्षस्य शिरः कर्तितवान् । तत् यज्ञकुण्डे अपतत् । देवानां प्रार्थनातः शिवः शान्ततां प्राप्य मेषमुण्डयोजनेन दक्षम् उज्जीवितवान् ।

शिवः पत्न्याः शरीरं स्कन्धे आरोप्य इहप्रपञ्चप्रज्ञां विस्मृत्य समग्रे देशे भ्रमणं कृतवान् । विष्णुः सतीदेव्याः शरीरं सुदर्शनचक्रेण खण्डशः कर्तितवान् । ते च खण्डाः देशे तत्र तत्र पतिताः । सतीदेवी भगवत्स्वरूपा इति ऋषयः जानन्ति स्म एव । अतः तस्याः शरीरस्य अङ्गानि यत्र यत्र पतितानि तानि सर्वाणि स्थलानि पूज्यानि जातानि । आ काश्मीरतः आकन्याकुमारि एतादृशानि पवित्रस्थलानि दृश्यन्ते ।

एतादृशपवित्रस्थानानां कारणतः एव भारतभूमिः अद्यापि पवित्रतमत्वेन परिगण्यते । पूर्वोक्तघटना कतमे वर्षे प्रवृत्ता इति कस्मिंश्चित् अपि ग्रन्थे लिखितं नास्ति । अतः एतस्याः घटनायाः प्राचीनता वर्षपरिमाणेन न अनुमातुं शक्या । शक्तिः दुर्गा, काली, चण्डी इत्यादीनि अनेकानि नामानि तस्याः एव देव्याः विविधानि स्वरूपाणि उपवर्णयन्ति ।

''एतत् आख्यानं खलु ?'' चमेली अपृच्छत् ।

''आम् । पौराणिकम् आख्यानम् एतत् । पुराणेषु एतादृश्यः अनेकाः रुचिकर्यः कथाः उपलभ्यन्ते । भारतदेशे पुराणानि उपपुराणानि च सन्ति अनेकानि । एकैकम् अपि बहुविस्तृतम् । अतः भारतीयः पुराणप्रपञ्चः नितरां विशालः'' इति उक्त्वा आगन्तुकैः कैश्चित् मेलितुम् इच्छन् देवनाथवर्यः आसनात् उत्थितवान् ।

''अन्याः अपि पुराणकथाः कदा वयं श्रोतुं शक्नुयाम श्रीमन् ?'' - अशोकः अपृच्छत् ।

''यदा भवति श्रवणेच्छा तीव्रा भवति तदा'' इति हसन् अवदत् देवनाथवर्यः ।





# प्रशस्तः परिश्रमः

राज्ञः विजयदत्तस्य द्वौ पुत्रौ - अजेयः विनयः चेति । तौ उभौ अपि कुशाग्रमती बुद्धिमन्तौ च । उभौ अपि षोडशे एव वयसि सकलविद्यापारङ्गतौ जातौ ।

तौ उभौ अपि रूपेण योग्यतया च समानौ इत्यतः राज्ञः समस्या उत्पन्ना यत् कस्मै राज्यं दातव्यम् इति । बहुधा विचिन्त्य सः निर्णीतवान् - 'शारीरकदार्ढ्यम् एव राज्ञः प्रथमा अर्हता भवति । राजा सुन्दराङ्गः उत्तमसौष्ठववान् च स्यात् । दर्शनमात्रेण प्रजाः तस्मिन् आदरभावं प्राप्नुयुः । न केवलं मुखमण्डले, अपि तु सर्वेषु अपि अङ्गेषु सौन्दर्यं स्फुटतया दृश्यते चेदेव राज्ञः वैशिष्ट्यं वर्धते' इति ।

अतः सः उभौ अपि राजकुमारौ आहूय अवदत् - ''भवन्तौ प्रासादात् अन्यत्र निवसन्तौ उत्तमम् अङ्गसौष्ठवं प्राप्नुयाताम् । भवतोः यस्य शरीरम् आकर्षकं भवति तस्मै राज्यं दीयते । किन्तु अयं नियमः पालनीयः यत् कोऽपि भवन्तौ राजकुमाररूपेण यथा न जानीयात् तथा जागरूकता आश्रयणीया'' इति ।

तस्मिन् राज्ये जयमल्लः नाम कश्चन प्रसिद्धः मल्लः आसीत् । सः एकस्मिन् वर्षे एकम् एव शिष्यत्वेन स्वीकरोति स्म । सः मल्लविद्यया सह अङ्गसौष्ठवसम्पादनार्थम् अपेक्षितान् उपायान् अपि बोधयति स्म ।

पितुः आदेशं प्राप्य अजेयः अनन्तरदिने एव जयमल्लसमीपं गतवान् । तच्च दिनं जयमल्लस्य शिष्यचयनदिनम् आसीत् । अजेयः अपि एतस्या परीक्षायां भागम् ऊढवान् । सौभाग्यवशात् सर्वासु परीक्षासु सः उत्तीर्णः जातः । अतः जयमल्लः तं शिष्यत्वेन स्वीकृतवान् । विविधानां व्यायामाभ्यासानां बोधनस्य आरम्भं कृतवान् च ।

विनयः अन्यं कञ्चित् ग्रामं गत्वा अज्ञातवासम् आरब्धवान् । तद्ग्रामीणाः अलसाः अदृष्टमात्रावलम्बिनः च । बहुभ्यः वर्षेभ्यः तत्र वृष्टिः न जाता आसीत् । अतः तत्र क्षामपीडा महती आसीत् । तथापि ग्रामीणाः कमपि

प्रयत्नम् अकुर्वन्तः दैवानुग्रहं प्रतीक्षमाणाः स्थिताः आसन् । अतः ते दैनन्दिनभोजनार्थम् अपि कष्टम् अनुभवन्ति स्म ।

विनयः निश्चितवान् यत् एतस्य ग्रामस्य अभिवृद्धिः साधनीया इति । अतः सः ग्रामप्रमुखं दृष्ट्वा उक्तवान् यत् यदि ग्रामवासिनः परिश्रमं कुर्वन्ति तर्हि ग्रामस्य समृद्धिः सिद्धा भवेत् इति । किन्तु ग्रामाधिकारी विनयस्य वचने विशेषासक्तिं न दर्शितवान् । प्रत्युत – 'व्यर्थः प्रयत्नः भवतः' इति तम् एव उपहसितवान् । तथापि विनयस्य सङ्कल्पः शिथिलः न जातः । यतः ग्रामाभिवृद्धिः कथञ्चित् साधनीया एव इति दृढनिश्चयं सः कृतवान् आसीत् । अतः सः ग्रामप्रमुखस्य पुरतः स्वस्य अभिज्ञानम् उक्तवान् ।

उपस्थितः राजकुमारः एव इति ज्ञात्वा ग्रामप्रमुखः भीतः । सः झटिति ग्रामजनान् मेलयित्वा राजकुमारस्य परिचयम् उक्त्वा तस्य आगमनोद्देशम् अपि विवृतवान् ।

''एषः शापग्रस्तः ग्रामः । अत्र महापरिश्रमकरणात् अपि न किमपि प्रयोजनम्'' इति उक्तवान् कश्चन वृद्धः ।

''ग्रामं शापमुक्तं कर्तुम् एव अहम् उपस्थितः अस्मि । कठिनपरिश्रमः कृतः चेत् सर्वम् अपि साधयितुं शक्यम् । यथा अहं सूचयामि तथा भवन्तः कुर्वन्ति चेत् समग्रं फलं प्राप्यते । यदि भवन्तः मया सह न आगच्छन्ति तर्हि आजीवनं दारिद्र्यकष्टम् अनुभविष्यन्ति । तावदेव न, राजदण्डः अपि प्राप्यते भवद्भिः'' इति उक्तवान् राजकुमारः । तस्य वचनं प्रेरकं यथा तथैव भयजनकम् अपि आसीत् ।

केचन हृदयपरिवर्तनं प्राप्य, अन्ये सर्वे राजदण्डभयात् च विनयस्य वचनस्य पालनम् अङ्गीकृतवन्तः । एवं समग्रः ग्रामः विनयस्य नेतृत्वे कठिनपरिश्रमे उद्युक्तः जातः । सर्वे मिलित्वा कूपान् कासारांश्च खातवन्तः । तेन ग्रामे उत्तमा जलव्यवस्था सिद्धा । सर्वे कृषिम् आरब्धवन्तः । तेषां परिश्रमः उत्तमं फलं प्रादात् । अनन्तरवर्षे सौभाग्येन मेघाः अवर्षन् । कासाराः सर्वे पूर्णाः । ग्रामस्य जलसमस्या



शाश्वतरूपेण समाप्ता जाता । जनाः ग्रामे उत्तमान् मार्गान् निर्माय, मार्गम् उभयतः वृक्षान् आरोपितवन्तः । वर्षद्वयाभ्यन्तरे ग्रामस्य स्थितिः पूर्णतः परिवृत्ता ।

निश्चिते काले विनयः प्रासादं प्रत्यागतवान् । तदा एव अजेयः प्रासादं प्राप्तवान् आसीत् । राजा उभयोः अपि परिश्रमकथां श्रुतवान् । उभयोः अपि शरीरसौष्ठवं परीक्षितवान् अपि । अजेयस्य शरीरम् एव दृढतरं, सुन्दरम्, आकर्षकं च आसीत् । सः महाराजम् अवदत् - ''अहम् उत्तमम् अङ्गसौष्ठवं सम्पादितवान् अस्मि । भवता सूचितस्य नियमस्य अनुगुणं मदीयं राजकुमारत्वं कदापि न प्रकटितम् अपि मया । विनयः तु स्वस्य राजकुलजातत्वं प्रकटयन् नियमभङ्गं कृतवान् । अतः अहम् एव राजा भवितुं योग्यः, न तु विनयः'' इति ।

तदा राजा मन्दहासं प्रकटयन् अजेयम् अवदत् - ''नदी-क्षेत्र-पर्वतादीनां जडपदार्थानां समूहः एव देशः न । मनुष्याणां कारणतः देशस्य देशत्वम् । प्रजाः एव देशस्य सम्पत्तिः । प्रजानां हितार्थं, देशस्य प्रगत्यर्थं च कृतः श्रमः एव सार्थकः भवति । भवतोः उभयोः अपि श्रमः अपरिमितः आसीत्, श्रद्धया च कृतः आसीत् इत्यत्र तु नास्ति सन्देहः । अतः एव भवन्तौ उत्तमम् अङ्गसौष्ठवं, रूपस्य आकर्षकतां च सम्पादितवन्तौ । तथापि भवतोः श्रमे अस्ति महान् भेदः । भवान् स्वशरीर-मात्रस्य विकासार्थं श्रमं कृतवान् । किन्तु विनयः प्रजानां हितार्थं श्रमं कृतवान् । विनयः तु सहस्रशः ग्रामीणान् तोषितवान् । शापग्रस्तं ग्रामं नन्दनवनतुल्यं कृतवान् सः ।

यद्यपि सः वयसा भवतः कनिष्ठः, तथापि सः एव राजा भवितुम् अर्हः वस्तुतः । एतस्य तात्पर्यं - 'भवतः परिश्रमः निष्प्रयोजकः' इति न । राज्ञा साधयितुम् अशक्यं कार्यम् अपि अस्ति । तच्च देशरक्षणम् । अतः भवान् सेनाधिपतिः भवितुम् अर्हति । प्रजारञ्जकः राजा, समर्थः सेनापतिः च यस्य देशस्य भवति, स च देशः विशेषप्रगतिं साधयिष्यति'' इति ।

अजेयः पितुः कथनस्य तात्पर्यं गृहीतवान् । अतः सः सेनाधिपतिपदस्वीकारं ससन्तोषम् अङ्गीकुर्वन् पितुः हर्षं वर्धितवान् ।



वैदीश्वरमन्दिरं कावेरीतीरे स्थिते कस्मिंश्चित् लघुनगरे अस्ति । एतस्मिन् नगरे एकः एव मुख्यमार्गः । अत्रैव प्राचीनं शिवमन्दिरं तिष्ठति । उपचारदेवतारूपेण ईश्वरस्य पूजा प्रचलति अत्र । सामान्यमन्दिरम् इव स्थितस्य एतस्य मन्दिरस्य

## कावेरीतीरप्रयाणम् - ११

# यात्रायाः अन्तिमः घट्टः

◆ *कथा* - जयन्ती महालिङ्गम् ◆ *चित्रम्* - गौतमसेनः




अनितरसाधारणम् एकं वैशिष्ट्यम् अस्ति । अगस्त्यनाडीज्योतिषस्य केन्द्रम् एतत् । 'ज्योतिषिकाणां स्वर्गम् एतत्' इति जनाः वदन्ति । नाडिज्योतिषं नाम नाडीग्रन्थम् अवलम्ब्य भूतभविष्यादीनां कथनम् । नाडीग्रन्थे प्रश्नकर्तुः समग्रं विवरणं लिखितं भवति । स च नाडीग्रन्थः सहस्राधिकवर्षेभ्यः पूर्वम् अगस्तमुनिना लिखितः । तत्र अद्य वर्तमानानां सर्वेषां भविष्यतः सूचना लभ्यते । वैदीश्वरमन्दिरे बहवः ज्योतिषिकाः सन्ति । नाडीज्योतिषम् एव तेषां कुलवृत्तिः । पारम्परिकः तेषां ज्योतिषकथनक्रमः एवम् अस्ति - ज्योतिषिकः आदौ भवताम् अङ्गुष्ठस्य अङ्कनं कागदे स्वीकरोति । ततः अन्तः गतः सः स्वसमीपे स्थितात् ताडपत्रराशितः भवत्सम्बद्धं ताडपत्रं स्वीकृत्य बहिः आगच्छति । ततः भवतः पारिवारिकस्थितिं, भूतकाले प्रवृत्ताः घटनाः, अग्रे प्रवर्तिष्यमाणाः प्रमुखघटनाः, अर्थादिस्थितिं च विस्तरेण वदति सः । केचन एतं भविष्यकथनक्रमं कपटतापूर्णं कथयन्ति । किन्तु असङ्ख्याः आस्तिकाः अत्र पूर्णविश्वासं दर्शयन्ति ।

वैदीश्वरमन्दिरस्य चिदम्बरस्य च मध्ये प्रसिद्धस्य शैवश्रेष्ठस्य तिरुज्ञानन् सम्बन्दरस्य जन्मस्थानम् अस्ति । तिरुज्ञानस्य विषये एवं श्रूयते यत् सः तृतीये एव वयसि तमिळुभाषीयानि द्वादशपदात्मकानि बहूनि गीतानि गायति स्म इति ।



*चिदम्बरीयं नटराजमन्दिरम्*

कावेर्याः उत्तरीयशाखा कोलेरुन् ।



*एकवारं वा नटराजदर्शनं प्राप्तव्यम् इति सङ्कल्पितवान् नन्दराजः*

(कोल्लिडम् इति नामान्तरम्) एतस्य आरम्भस्थले एव अस्ति चिदम्बरम् । अत्रत्ये प्रसिद्धे नटराजमन्दिरे आकाशलिङ्गम् अस्ति । पञ्चसु भूतेषु अन्यतमः अस्ति आकाशः । अत्रत्या शिवमूर्तिः आनन्दताण्डवमुद्रया तिष्ठति । शिवः वामपादम् उन्नीय आकाशे प्रसारितवान् अस्ति । एतद्विषये एका पुराणकथा एवं श्रूयते -

पूर्वं कदाचित् शिव-पार्वत्योः नृत्यस्पर्धा प्रवृत्ता । पार्वती शिवस्य सर्वाः नृत्यभङ्गीः अनुकरोति स्म । अतः कस्यापि श्रेष्ठता निर्णीता न जाता । अन्ते शिवः स्वस्य एकं पादम् उन्नीय स्कन्धे स्थापितवान् । शिष्टाचारेण बद्धा पार्वती लज्जावशात् एवं कर्तुं न शक्तवती । अतः तस्याः पराजयः जातः ।

एतत् मन्दिरं कदा निर्मितम् इति स्पष्टतया न ज्ञायते । नटराजं स्वसंरक्षकं भावयन्तः चोलराजाः एतस्य मन्दिरस्य शिखरं सुवर्णकलशेन अलङ्कृतवन्तः । पाण्ड्याः नायकवंशीयाः च काले काले धनधान्यादीनां दानेन मन्दिरव्यवस्थायां विशेषसाहाय्यम् आचरन्ति स्म ।

चिदम्बरसम्बद्धः महापुरुषः नन्दनारः । सः गोपालकृष्णभारती ('नन्दनचरित'निर्माता) इति, सेक्कीयार् इति च नाम्ना अपि प्रसिद्धः । नन्दनारः पङ्के जातं पुष्पम् इव श्रेष्ठः निष्कल्मषः च आसीत् । सः अन्त्यजः । भेरीवादककुलं तस्य । किन्तु आ जन्मतः एव शिवस्य विषये महती श्रद्धा आसीत् तस्य । अन्ये बालाः यदा मृत्तिकया पाञ्चालिकाः निर्माय क्रीडन्ति स्म तदा एषः मृत्तिकया शिवलिङ्गं निर्माय पूजां करोति स्म । चिदम्बरीयस्य नटराजस्य दर्शनं प्राप्तव्यम् इति तस्य महती इच्छा । सः स्वगतम् अन्यान् च सदा वदति स्म - 'अहं थिल्लयीं (चिदम्बरं) गमिष्यामि श्वः' इति । बहूनि वर्षाणि यावत् सः एवम् एव वदन् आसीत् । अतः जनाः तस्य वास्तविकनाम विस्मृत्य 'नालई-प-पोवान्' (श्वः गन्ता) इति नाम्ना निर्देशम् आरब्धवन्तः । अन्ते कदाचित् सः चिदम्बरं प्रति प्रस्थितवान् । गमनसमये तस्य मनसि विचारः आगतः - अहम् अन्त्यजः अस्मि इति । अतः नगरसीमा यदा प्राप्ता तदा तस्य शरीरे कम्पनम् आरब्धम् । कानिचन दिनानि सः नगरे एव अटितवान्, किन्तु मन्दिरसमीपं गन्तुं धैर्यं न प्राप्तवान् । कदाचित् रात्रौ सः चिन्तितवान् - 'मम, आराध्यदेवस्य च मध्ये एषा जातिः विघ्नायते । अन्यथा अहं भगवद्दर्शनं प्राप्नुयाम्' इति । तस्यां रात्रौ स्वप्ने भगवान् प्रत्यक्षीभूय - 'भवान् मन्दिरदिशि गच्छतु' इति आदिष्टवान् । तस्याम् एव रात्रौ शिवमन्दिरस्य अर्चकस्य

स्वप्ने अपि प्रत्यक्षीभूय सः आदिष्टवान् - 'श्वः मम महाभक्तः मन्दिरम् आगमिष्यति । तस्य स्वागतव्यवस्थां करोतु' इति । अनन्तरदिने नन्दनारः शिवस्य पूजार्थं कनकसभाम् आगतवान् । यावत् सर्वे भक्ताः आश्चर्येण पश्यन्तः आसन् तावता शिवभक्तः 'नालइप्पोवनः' आराध्यमूर्तौ विलीनः जातः ।

मूलस्त्रोतस्तः कोडगुतः ७६५ कि.मी. प्रयाणं कृत्वा कावेरी बङ्गालोपसागरे पूम्पहारनामके स्थले लघुधारारूपेण समुद्रेण सङ्गता भवति ।

पूम्पहारप्रदेशः चोलकाले 'कावेरीपूम्पट्टिनम्'नामकं नौकास्थानम् आसीत् । यूनानीयः भूगोलशास्त्रज्ञः टालमी अभिप्रैति यत् पौराणिककथासु वर्णितं कावेरीतीरस्थं प्रमुखं वाणिज्यकेन्द्रम् आसीत् एतत् इति । द्वितीयशतकस्य अन्त्यं यावत् एतत् वाणिज्यकेन्द्रम् अधिकव्यवहारयुक्तम् आसीत् । रोमनगरं प्रति अपि इतः नौकाः गच्छन्ति स्म । अग्रे एतस्य महान् भागः जले निमग्नः जातः ।

एषु दिनेषु पुरातत्त्व-शास्त्रज्ञाः खननतः इष्टिका-निर्मिताम् एकां भग्नभित्तिं प्राप्तवन्तः । सा च सङ्गम-काले (क्रि.पू.३ - क्रि.पू.२) निर्मिता । गोवास्था राष्ट्रिय-महासागर-विज्ञान-संस्था अभिप्रैति यत् एषा भित्तिः पूम्पहार-नौकास्थानस्य भागभूता आसीत् इति । पूम्पहारपरिसरे यत् उत्खननं कृतं ततः पक्वमृत्तिकामयानि पात्राणि, कूपाः, रोमनूनाणकानि, इष्टिकाः, शिलास्तम्भाः, कृष्ण-रक्त-पात्राणाम् अवशेषाः इत्यादयः प्राप्ताः सन्ति । पल्लवनीश्वरनामके स्थले एका बौद्धविहारस्थली अपि प्राप्ता अस्ति ।

१९७० तमे वर्षे पूम्पहारनगरे सप्ताट्टात्मकः सुन्दरः 'सिलप्पधिकार-कला-सङ्ग्रहालयः' निर्मितः । एतस्मिन् सङ्ग्रहालये इलङ्गो-अडिगाळ्वर्येण रचिते 'सिलप्पधिकार'नामके ग्रन्थे स्थितानि चित्राणि सङ्गृहीतानि सन्ति । राजकुमारः इलङ्गोवर्यः पूम्पहार-वासिनोः कण्णगी-कोवलन्-नामकयोः दम्पत्योः भावनात्मककथां रचितवान् अस्ति ।

कोवलनः राजनर्तक्यां माधव्याम् अनुरक्तः भूत्वा तस्याः निमित्तं धनं समयं च व्ययीकरोति । उपेक्षिता कण्णगी भगवन्तं प्रतिदिनं प्रार्थयते, प्रतिदिनम् अपि पत्युः आगमनस्य निरीक्षणं करोति च । समयः गतः । कण्णग्याः प्रयत्नः फलितः ।



चिन्दम्बरमन्दिरस्य प्रमुखः देवः - नटराजः



कण्णगी स्वस्य नूपुरं भङ्क्त्वा दर्शितवती यत् एतस्मिन् मणयः सन्ति इति ।

कोवलनः स्वस्य मूर्खतायाः निमित्तं पश्चात्तापम् अनुभूतवान् । नितरां परिश्रान्तः सन् सः गृहं प्रत्यागतः । पतिः पत्नी च सम्भूय निर्णीतवन्तौ यत् मधुरैनगरं गत्वा भाग्यपरीक्षा करणीया इति । ताभ्यां कावेरीतीरे यत् प्रयाणं कृतं तस्य सरसं मनोहरं च वर्णनं कृतवान् अस्ति राजकुमारः इलङ्गोवर्यः । मधुरैनगरं गतः कोवलनः कण्णग्याः एकं नूपुरं कस्मैचित् स्वर्णकाराय विक्रीणीते । सः स्वर्णकारः पाण्ड्यराज्ञ्याः एकं नूपुरं केभ्यश्चित् दिनेभ्यः पूर्वं चोरितवान् आसीत् । आत्मरक्षणार्थं तेन सुयोग्यः अवसरः प्राप्तः । सः राजसमीपं गत्वा उक्तवान् यत् कोवलनः एव राज्ञ्याः नूपुरं चोरितवान् इति । राजा अविचिन्त्य निर्णयं कृतवान् । कोवलनेन कृता निर्दोषिता-अभियाचना तेन तिरस्कृता । तदीयं शूलारोपणं च तेन आज्ञापितम् । कण्णगी एतां वार्तां श्रुतवती । सा कोपेन उन्मत्ता जाता । राज्ञ्याः समीपं गत्वा सा स्वस्य विरोधं प्रकटितवती । सा राज्ञ्याः पादे स्थितं नूपुरम् आकृष्य भञ्जयित्वा दर्शितवती यत् तस्मिन् मौक्तिकानि सन्ति इति । स्वस्य पादे स्थितं नूपुरम् अपि भञ्जयित्वा दर्शितवती यत् एतस्मिन् मणयः सन्ति इति । एतत् दृष्ट्वा राजा राज्ञी च आश्चर्यचकितौ । तौ पश्चात्तापदग्धौ जातौ । तेनैव दुःखेन तौ प्राणत्यागं कृतवन्तौ । कण्णगी शोकवितप्ता सती शापं दत्तवती । समग्रं मधुरैनगरम् अग्निसात् जातम् । दुःखिता कण्णगी श्मशानसदृशे तस्मिन् दग्धे नगरे उन्मत्ता इव अटितवती । यथा कावेरी समुद्रेण सङ्गता सती लक्ष्यं प्राप्नोति तथैव कण्णगी अपि देवरथे उपविश्य कोवलनेन सङ्गता भवितुं स्वर्गं प्रति प्रस्थितवती ।



पुम्पहारप्रदेशे कावेरी समुद्रेण सङ्गता भवति ।

# चन्दमामा

## स्वपरम्परा अभिज्ञायताम्

एतस्मिन् अङ्के प्रकाशितायाः प्रश्नावल्याः उत्तरम् अग्रिमे अङ्के प्रकाशयिष्यते । तदभ्यन्तरे एतेषाम् उत्तरं स्वयं ज्ञात्वा भारतस्य प्राचीनपरम्पराम् अवगत्य ज्ञानं सुसमृद्धं क्रियताम् ।

### 1



अ. सः भारतीयः वैज्ञानिकः कः, यश्च कोपर्निकस्तः सहस्राधिकवर्षेभ्यः पूर्वम् एव उक्तवान् आसीत् यत् पृथिवी सूर्यं परितः परिभ्रमति इति ?

आ. भारतस्य तत् स्थानं किं, यत्र च शिवलिङ्गं क्वचित् स्वयम् उद्भवति, पुनश्च क्वचित् स्वयम् अदृश्यतां गच्छति ?

इ. मरणानन्तरम् अस्माकं चैतन्यं क्व गच्छति इत्येतत् रहस्यं यमराजतः एव ज्ञातवान् बालकः कः ?

ई. प्राचीनभारतस्य नास्तिकदर्शनानां त्रीणि नामानि कानि ?

उ. नूतनस्य मतस्य आरम्भं कृत्वा अपि लोकप्रियतां प्राप्तुम् अशक्तः राजा कः ?

### 2

प्राचीने काले अरण्ये बहवः ऋषयः वसन्ति स्म । तेषां कुले जातः कश्चन तरुणः काञ्चित् युवतिं परिणेतुम् इष्टवान् । किन्तु अत्रान्तरे सा युवतिः सर्पदंशनेन दिवं गता । युवकः शोकतप्तः जातः । प्रेमदेवतायाः साहाय्येन सः मृत्युलोकं गत्वा स्वस्य प्रियाम् अन्विष्टवान् । तस्य प्रयत्नम् अनुरागगभीरतां च दृष्ट्वा सन्तुष्टः मृत्युदेवः तदीयस्य आयुषः अर्धभागं तस्यै दत्त्वा ताम् उज्जीवितवान् । ततः तौ सुखेन वैवाहिकजीवनं यापितवन्तौ ।

एतस्यां कथायां प्रस्तुतः सः युवकः कः ? युवतिश्च का ?





# चिकित्साक्रमः

हेमन्तपुरनामके ग्रामे विवेकवर्धनः नाम वैद्यः निवसति स्म । समर्थः चिकित्सकः इति तस्य कीर्तिः सर्वत्र प्रसृता आसीत् । राज्यस्य सुदूरग्रामेभ्यः अपि जनाः चिकित्सार्थं तस्य गृहम् आगच्छन्ति स्म ।

प्रतिदिनं प्रातः सः जनानां चिकित्सां करोति स्म । अपराह्णे च शिष्यान् आयुर्वेद-शास्त्रं बोधयति स्म ।

ये रोगिणः चिकित्सार्थं तत्समीपम् आगच्छन्ति स्म ते सर्वे सन्तोषेण एव चिकित्साशुल्कं दत्त्वा गच्छन्ति स्म । यतः विवेकवर्धनेन दत्तम् औषधं निश्चयेन रोगं निवारयति स्म ।

एकदा कश्चन रोगी चिकित्सार्थं तस्य समीपम् आगतवान् । वैद्यः तं पृष्टवान् - ''ह्यः रात्रौ किं खादितं भवता ?'' इति ।

रोगी अवदत् - ''यवागूः पलाण्डुखण्डैः सह सेविता'' इति ।

''एवम् !'' इति उक्त्वा योग्यम् औषधं दत्त्वा चिकित्साशुल्कत्वेन रूप्यकद्वयं ततः स्वीकृतवान् वैद्यः ।

अपरः रोगी यदा आगतः तम् अपि अपृच्छत् वैद्यः - ''ह्यः रात्रौ कः आहारः सेवितः भवता ?'' इति ।

''भोजने अन्नं, सूपः, व्यञ्जनं च आसीत् । पायसम् अपि आसीत् भोजने । भोजनोत्तरम् एकम् आम्रफलं खादितं मया'' इति अवदत् रोगी ।

तस्मै औषधं दत्त्वा ततः दश रूप्यकाणि शुल्कत्वेन स्वीकृतवान् वैद्यः । रोगी ससन्तोषं तावत् धनं दत्त्वा निर्गतवान् ।

ततः तृतीयः रोगी आगतवान् । तम् अपि पृष्टवान् वैद्यः - ''भवता ह्यः रात्रौ किं सेवितम् ?'' इति ।

''ह्यः रात्रौ मया अजमांसनिर्मितं भक्ष्यं सेवितम् । मत्स्याः च खादिताः । किञ्चित्

मद्यं च सेवितम्'' इति अवदत् रोगी ।

तस्मै अपि यथायोग्यम् औषधं दत्त्वा शुल्कत्वेन विंशतिं रूप्यकाणि स्वीकृतवान् वैद्यः । रोगी ससन्तोषं तावत् धनं दत्त्वा निर्गतवान् ।

वैद्यस्य पार्श्वे एव उपविष्टः सुहृत् नारायणः एतत्सर्वं कुतूहलेन परिशीलयन् आसीत् । वैद्यस्य चिकित्साक्रमः तस्मै अरोचत । किन्तु वैद्यः एकैकम् अपि रोगिणं - 'ह्यः रात्रौ किं सेवितम् ?' इति किमर्थं पृच्छति इति तेन न ज्ञातम् ।

सर्वेषां रोगिणां निर्गमनस्य अनन्तरं सः वैद्यं तस्य कारणं पृष्टवान् । तदा वैद्यः मन्दहासपूर्वकम् उक्तवान् - ''गतदिनस्य भोजनस्य विषये प्रश्नं पृष्ट्वा अहं रोगिणः अर्थस्थितिं जानामि । तत्तस्य आर्थिकस्तरम् अवगत्य चिकित्साशुल्कं सूचयामि । अतः मया सूचितं चिकित्साशुल्कं सन्तोषेण दत्त्वा गच्छन्ति रोगिणः ।

तावदेव न, रोगी किं सेवितवान् इति यदा ज्ञायते तदा तस्य आहारपद्धतिः, ततः रोगस्य कारणं चापि ज्ञायते । आहार-विहारादीनाम् असंयमतः एव बहवः रोगाः उत्पद्यन्ते । निर्धनानां रोगाः पोषकाहाराभावतः भवन्ति । धनिकानां रोगाः अधिकाहार-सेवनतः अजीर्णतः च भवन्ति प्रायः ।

रोगस्य अपरम् अपि कारणं भवति आहारांशानां कुमिश्रणम् । बहवः न जानन्ति यत् केन सह किं सेवनीयम् इति । क्षीरस्य पानात् पूर्वम् अनन्तरं वा लवणांशाहारस्य मांसमदिरादीनां वा सेवनं न युक्तम् । आहारस्य कुमिश्रणेन आहारः विषायते । ततः रोगाः उत्पद्यन्ते ।

ऋतुम् अनुसृत्य अपि आहारः सेवनीयः भवति । कस्याम् ऋतौ कः आहारः सेवनीयः, कीदृशः आहारः त्याज्यः इति आयुर्वेदग्रन्थे उक्तम् अस्ति । अतः ऋतुचर्या अवश्यं पालनीया । एवम् आहारसेवनक्रमस्य ज्ञानं चिकित्सायां नितराम् उपकरोति । अतः एव मया दत्तम् औषधं सर्वदा फलं ददाति एव'' इति ।

विवेकवर्धनस्य चिकित्साक्रमं दृष्ट्वा नारायणः नितरां सन्तुष्टः । सः तं बहुधा अभिनन्दितवान् ।



योग्येन क्रमेण कथासमाप्तिं संसूच्य पुरस्कारः प्राप्यताम्

# सर्जनात्मिका स्पर्धा

*अधः एकस्याः कथायाः आरम्भः दत्तः अस्ति । उत्तमां कथां रचयितुं अपेक्षितानि उपादानकारणानि सर्वाणि सन्ति तत्र । तानि उपयुज्य कथायाः पूर्णः आकारः परिकल्पनीयः भवद्भिः । कथासमाप्तेः विभिन्नान् प्रकारान् चिन्तयित्वा योग्यां चित्वा लिखन्तु । योग्या शीर्षिका अपि देया । स्मर्तव्यम् अत्र यत् कथाशेषः १५०-२०० शब्दैः एव रचनीयः । चितायै रचनायै पुरस्कारः दास्यते । सा कथा पत्रिकायां प्रकाशयिष्यते च । एतस्यां स्पर्धायां बालाः एव भागं ग्रहीतुम् अर्हन्ति, न ज्येष्ठाः । कथया सह नाम, सङ्केतं, वयः, कक्ष्यां, विद्यालयनाम पत्रालयसङ्ख्यां (पिन् कोड्) च विलिख्य - **चन्दमामा (संस्कृतम्), अक्षरम्, ८ उपमार्गः, गिरिनगरम्, बेङ्गलूरु - ५६० ०८५** इत्येतस्मै सङ्केताय प्रेषयन्तु । कथारचनायां ज्येष्ठेभ्यः वयं न अवराः इत्येतत् बालैः प्रमाणीकरणीयम् अस्ति । अतः कथारचनार्थं ज्येष्ठानां साहाय्यं सर्वथा मास्तु ।*

गुरुकुलस्य केचन छात्राः विद्याभ्यासं समाप्य गृहं प्रति गन्तुं सन्नाहं कुर्वन्तः आसन् । प्रस्थानसमये सर्वे गुरुं प्रणम्य आशीर्वादं प्राप्तवन्तः । अन्ते राजारामः अपि नमस्कारं कृतवान् । सः अन्ये च्छात्राः इव विद्याभ्यासे विशेषसिद्धिं दर्शयितुं न शक्तः आसीत् । तथापि गुणैः सः गुरोः हृदयं जितवान् आसीत् ।

''वत्स ! गुणेन भवान् सर्वान् अतिशेते । तथापि भवन्तं पण्डितं कर्तुं मया न शक्तम्'' इति अवदत् गुरुदेवः ।

''आचार्यवर्य ! अत्र दोषः मम एव । मन्दमतित्व-कारणतः अहं भवतः योग्यः शिष्यः न जातः । तथापि भवतः आशीर्वादस्य बलेन तादृशीं योग्यतां प्राप्तुं प्रयत्नं करिष्यामि'' इति अवदत् राजारामः ।

''मम आशीर्वादः अस्ति एव । जीवने सफलतां प्राप्तुं त्रीन् नियमान् अहं वदिष्यामि । 'लक्ष्यसिद्धिपर्यन्तं प्रयासः न परित्यक्तव्यः' इति प्रथमः नियमः । 'उत्तरप्राप्तिपर्यन्तं निरन्तरं प्रश्नाः करणीयाः' इति द्वितीयः नियमः । 'कस्यचित् चिन्तनस्य क्रियान्वयनात् पूर्वं पुनश्चिन्तनं करणीयम्' इति तृतीयः नियमः । एतान् त्रीन् नियमान् यदि भवान् सम्यक् पालयेत् तर्हि निश्चयेन जीवनपरीक्षायाम् उत्तीर्णः भवेत्'' इति उक्तवान् गुरुदेवः ।

गुरोः उपदेशम् आशीर्वादं च प्राप्य स्वभाग्यस्य अन्वेषणार्थं ततः निर्गतवान् राजारामः ।

*किं सः अग्रे साफल्यं प्राप्नोत् ? यदि साफल्यं प्राप्तं स्यात् तर्हि सः तेषां नियमानाम् उपयोगं कथं कृतवान् स्यात् ? कथायाः उत्तरार्धं लिखित्वा* ***अक्टोबर्मासस्य ३० दिनाङ्कतः पूर्वं*** *प्रेषयन्तु । पुरस्कृता रचना नवम्बर्सञ्चिकायां प्रकाशयिष्यते ।*

**- सम्पादकः**

## सप्टेम्बर् - २००० अङ्के प्रकाशितानां प्रश्नानाम् उत्तराणि

१. अ. महावीरः जिनः, गौतमबुद्धश्च ।
   आ. पालीभाषया ।
   इ. अर्धमागधीभाषया ।
   ई. त्रिपिटिकाः ।

२. उज्जैनराजः भर्तृहरिः । राज्ञ्याः नाम पिङ्गला इति ।



# विस्मरणशीलता

कस्मिंश्चित् ग्रामे वासवः नाम कश्चन पलाण्डुविक्रेता वसति स्म । एकस्मिन् दिने मार्गे गच्छन् सः कलहं कुर्वन्तौ द्वौ दृष्टवान् । कलहनिवारणं तस्य प्रवृत्तिषु अन्यतमम् आसीत् । अतः सः कलहायमानयोः समीपं गत्वा पृष्टवान् - ''किं प्रचलति अत्र ? मार्गे किमर्थं कलहः क्रियते ?'' इति ।

कलहायमानयोः अन्यतरः रङ्गः उक्तवान् - ''यस्मिन् ग्रामे मम श्वशुरगृहमस्ति तत्रैव मणेः एतस्य अपि अस्ति । केभ्यश्चित् मासेभ्यः पूर्वं मम श्यालः एतस्मै सहस्त्रं रूप्यकाणि ऋणरूपेण दत्त्वा सूचितवान् आसीत् यत् तत् धनं मह्यं दातव्यम् इति । किन्तु एषः तं विषयं पूर्णतः विस्मृतवान् । दिनद्वयात् पूर्वं मम श्यालः पृष्टवान् यत् मणये मया दत्तं धनं तेन प्रत्यर्पितं किम् ? इति । तदा अहं वृत्तान्तं ज्ञातवान् । इदानीम् अहं वृद्धिसमेतं धनं पृच्छन् अस्मि । किन्तु एषः वञ्चकः दातुं न इच्छति'' इति ।

तदा मणिः हस्तौ योजयित्वा विनयेन उक्तवान् - ''महोदय, अहं रङ्गस्य श्यालात् सहस्त्रं रूप्यकाणि स्वीकृतवान् इति तु सत्यम् । गृहस्य समस्यासु व्यग्रः अहं रङ्गम् एतं विषयं वक्तुं विस्मृतवान् । एषः इदानीं वृद्धिसमेतं पृच्छन् अस्ति । अत्र वृद्धेः प्रश्नः न उचितः । अहं विस्मरणनिमित्तं क्षमां प्रार्थये । सहस्त्रं रूप्यकाणि तु कालान्तरे प्रत्यर्पयितुं सिद्धः अस्मि'' इति ।

''दशानां विंशतेः वा रूप्यकाणां व्यवहारः न एषः, अपि तु सहस्त्ररूप्यकाणाम् । अतः किं क्षमायाचनेन ?'' इति पृष्टवान् रङ्गः ।

''भोः रङ्ग, दातव्यस्य धनस्य परिमाणस्य, विस्मरणशीलतायाः च न कोऽपि सम्बन्धः । शतरूप्यकाणां दानस्य यथा तथैव लक्ष-

'भामहः'

रूप्यकाणां कोटिरूप्यकाणां वा दानस्यापि विस्मरणं भवितुम् अर्हति एव । विस्मरण-शीलता मनुष्यस्य कश्चन स्वाभाविकः दोषः । मम एव विषयं स्वीकरोतु । अद्य प्रातः स्नानसमये कण्ठहारं कूपस्य भित्तौ स्थापितवान् अहं तस्य स्वीकरणं विस्मृतवान् । इदानीं मध्येमार्गं तत् स्मृतवान् अहम् । द्विसहस्त्राधिकरूप्यकात्मकं मूल्यं तस्य । कण्ठहारं भवान् कूपसमीपे स्थापयित्वा तस्य आनयनं किमर्थं विस्मृतवान् इति यदि कश्चित् पृच्छेत् तर्हि अहं किम् उत्तरं दातुं शक्नुयाम् ?'' इति उक्तवान् वासवः ।

एवं सः रङ्गं मणिं च कथञ्चित् सान्त्वयित्वा कलहस्य निवारणं कृत्वा ततः स्वकार्यार्थं निर्गतवान् । किञ्चित्समयानन्तरं वासवः यदा गृहम् आगतवान् तदा तस्य पत्नी पृष्टवती - ''भवतः कण्ठहारः कुत्र अस्ति ?'' इति ।

''प्रातः स्नानसमये कूपस्य पार्श्वे स्थापितवान् आसम् । तत्रैव स्यात्'' इति वासवः उक्तवान् ।

''इदानीं पञ्चदशनिमेषेभ्यः पूर्वं कश्चित् आगत्य भवता सूचितम् इति उक्त्वा कूपस्य समीपे स्थितं कण्ठहारम् इतः नीतवान्'' इति पत्नी खेदेन उक्तवती ।

वासवः चिन्तितवान् यत् जनसमूहस्थः कश्चित् चतुरः मम वचनं श्रुत्वा अनुचितं लाभं स्वीकृतवान् अस्ति इति ।

सः दुःखितः भूत्वा चिन्तनम् आरब्धवान् - 'मणेः विस्मरणशीलताकारणतः रङ्गस्य कापि हानिः न जाता । परं मम विस्मरण-शीलताकारणतः मम एव द्विसहस्त्ररूप्यकाणां हानिः जाता' इति ।

तावता कश्चन युवकः तत्समीपम् आगत्य - ''महाशय, अहं रङ्गस्य सेवकस्य पुत्रः । अद्य कलहनिवारणसमये भवान् सर्वेषां पुरतः स्वविस्मरणशीलताम् अङ्गीकृतवान् । भवता कण्ठहारः कूपस्य समीपे त्यक्तः वा न वा इति परीक्षितुं मम स्वामी मां प्रेषितवान् । असत्यम् उक्त्वा मया भवतः पत्नीतः हारः नीतः । एषः एव सः भवतः हारः'' इति उक्त्वा वासवस्य हस्ते हारं स्थापयित्वा धावन् ततः निर्गतवान् ।



# ५४. दुर्योधनस्य चिन्ता

# महाभारतम्

अनन्तरदिने प्रातः कौरवपक्षीयाः अश्वत्थाम-कृप-शल्याः पाण्डवपक्षीयाभ्याम् अभिमन्यु-धृष्टद्युम्नाभ्यां सह युद्धम् आरब्धवन्तः । एतदनन्तरं दुर्योधनपुत्रस्य लक्ष्मणस्य अभिमन्योः च घोरं युद्धम् आरब्धम् । एतस्मिन् युद्धे लक्ष्मणस्य पराजयसम्भावना यदा ज्ञाता तदा दुर्योधनः अन्ये च अभिमन्युम् आक्रान्तवन्तः । तथापि अल्पाम् अपि भीतिम् अप्राप्य अभिमन्युः युद्धम् अनुवर्तितवान् । अत्रान्तरे तस्य साहाय्यार्थम् अर्जुनः आगतवान् । एतत् दृष्ट्वा लक्ष्मणस्य साहाय्यार्थम् भीष्मद्रोणादयः महारथिनः उपस्थिताः । एतदवसरे अर्जुनं सम्मुखीकर्तुं कोऽपि न शक्तवान् । अर्जुनः प्रलयकालिकरुद्रः इव व्यवहरन् शत्रुसंहारे निमग्नः आसीत् । एतत् दृष्ट्वा कौरवसेनायाः बहवः योद्धारः पलायितवन्तः । केचन च मरणं प्राप्तवन्तः ।

तदा भीष्मः द्रोणम् अवदत् - ''महता शौर्येण युद्धं कुर्वतः अर्जुनस्य सम्मुखीकरणं नितरां कष्टकरम् । तस्मात् भीतां पलायनरताम् अस्मत्सेनाम् अद्य वयं प्रायः प्रत्यानेतुं न शक्नुयाम । सूर्यास्तः तु कथञ्चित् आसन्नः इव । अतः अद्यतनयुद्धस्य समाप्तिम् उद्घोषयाम'' इति ।

तृतीयदिने कौरवसेनया गरुडव्यूहः रचितः । पाण्डवसेना च अर्धचन्द्रव्यूहरूपेण





अतिष्ठत् । यदा युद्धम् आरब्धं तदा दुर्योधनः स्वस्य रथं सेनां च घटोत्कचं लक्ष्यीकृत्य अग्रे अनयत् । भीष्मः द्रोणः चापि शौर्येण आक्रमणम् आरब्धवन्तौ । अभिमन्युः सात्यकिश्च शकुनिं सम्मुखीकृतवन्तौ । अर्जुनः एतस्मिन् अपि दिने कौरवसेनायाः नाशने उद्युक्तः जातः । भीष्मः द्रोणः च अर्जुनम् अनुकुर्वन्तौ इव पाण्डवसेनायाः नाशनम् आरब्धवन्तौ । घटोत्कचः भीमः च सम्भूय कौरवसेनायाः दूरप्रेषणार्थं प्रयासम् आरब्धवन्तौ । पलायमानां स्वसेनां निरोद्धुं भीष्मः द्रोणश्चापि न शक्तौ । किन्तु दुर्योधनः तत्कार्यं साधितवान् । वेगेन अग्रे गच्छन्तीं दुर्योधनसेनां दृष्ट्वा पलायमाने सैन्ये लज्जा उत्पन्ना । अतः तत्रत्याः सर्वे पुनरपि युद्धे प्रवृत्ताः जाताः ।

तदा दुर्योधनः भीष्मसमीपं गत्वा क्रोधमिश्रितस्वरेण अवदत् - ''आर्य ! रणरङ्गे भवति उपस्थिते अपि अस्माकं सेना पलायते यत् तस्मादपि अधिकः अपमानकरः विषयः अन्यः कः स्यात् ? पाण्डवानां विषये भवतः सहानुभूतिः दया च अद्यापि न अपगता । पाण्डुपुत्रैः, सात्यकिना, धृष्टद्युम्नेन च सह अहं युद्धं न करोमि इति भवता किमर्थम् उक्तम् ? भवादृशाः अपि पूर्णसामर्थ्यम् उपयुज्य युद्धं यदि न कुर्युः तर्हि मम पक्षस्य का वा गतिः स्यात् ? भवतां शक्तिसामर्थ्येषु विश्वस्य एव खलु मया युद्धनिर्णयः कृतः ? किम् एतत् विस्मृतं भवद्भिः ?'' इति ।

एतत् श्रुत्वा क्रुद्धः अपि भीष्मः विषादमिश्रितस्वरेण अवदत् - ''पाण्डवान् जेतुम् इन्द्रः देवसेना वापि असमर्थः इति मया पूर्वम् एव उक्तम् । अहं वृद्धः अस्मि । शौर्यप्रदर्शने मया कदापि प्रमादः न कृतः । तथापि भवन्मुखात् एतादृशानि वचनानि आगच्छन्ति, यत् तत् तु दौर्भाग्याय । आस्तां तावत्, मम शौर्यं भवान् भवत्पक्षसमर्थकाः च सकृत् पश्यन्तु तावत्'' इति ।

एतावत् उक्त्वा सः क्रोधेन तपन् पाण्डवसैन्यं क्रूरतया दण्डयन् अग्रे गतवान् । दुर्योधनसेना तेन सह आसीत् एव । तस्मिन् दिने भीष्मस्य पुरतः आगताः सर्वेऽपि सैनिकाः व्रणिताः सन्तः एव प्रतिगताः । पाण्डवानां सैन्यं सहस्रशः खण्डैः विभक्तम् अभवत् । कृष्णार्जुनौ अपि भीष्मस्य संहारकार्यम् अवरोद्धुम् असमर्थौ जातौ ।

भयेन पलायमानान् सैनिकान् दृष्ट्वा कृष्णः

अवदत् - ''अर्जुन ! स्वसामर्थ्यं प्रदर्शयितुम् अयं सुयोग्यः कालः भवतः । सम्मुखम् आगतान् सर्वान् कौरववीरान् संहरिष्यामि इति भवान् पूर्वम् उक्तवान् आसीत् । भीष्मं दृष्ट्वा सर्वे सैनिकाः कालरुद्रस्य दर्शनात् इव भीताः सन्ति । एतस्मिन् अवसरे भवता साहसं दर्शनीयम्'' इति ।

''हे कृष्ण ! मम रथं भीष्मसमीपं नयतु । तं वृद्धं परलोकं गमयिष्यामि'' इति उक्तवान् अर्जुनः । कृष्णः तथैव कृतवान् ।

भीष्मः यदा दृष्टिगोचरः जातः तदा अर्जुनः धनुषि बाणं संयोज्य प्रेरितवान् । तस्मात् भीष्मस्य धनुः भग्नम् । भीष्मः मन्दहास-पूर्वकम् अपरं धनुः उन्नीय युद्धार्थं सन्नद्धः जातः । उभयोः अपि घोरं युद्धम् आरब्धम् । तथापि कृष्णस्य मनसि अभासत यत् अर्जुनः उत्साहेन युद्धं कुर्वन् नास्ति इति । सः अचिन्तयत् - 'यदि अर्जुनः भीष्मविषये एवम् एव आदरं प्रदर्शयेत् तर्हि पाण्डवसेना अचिरात् एव नष्टा भवेत् । तदा मया एव कवचादिकं धृत्वा भीष्मादीनां वधं कृत्वा पाण्डवपक्षः संरक्षणीयः स्यात्' इति ।

अत्रान्तरे कौरववीराः अर्जुनं परितः स्थित्वा आक्रमणम् आरब्धवन्तः । तदा सात्यकिः अर्जुनस्य साहाय्यार्थम् आगतः । सः धावतः सैनिकान् उच्चस्वरेण आज्ञापयत् - 'भो भोः सैनिकाः, तिष्ठन्तु' इति ।

एतत् दृष्ट्वा कृष्णः सात्यकिम् अवदत् - ''सात्यके ! ये पलायनं कर्तुम् इच्छन्ति ते कुर्वन्तु नाम । एषोऽहं भीष्मद्रोणादीन् कौरव-वीरान् सर्वान् चक्रायुधेन हत्वा युधिष्ठिरस्य पट्टाभिषेकं निर्वर्तयिष्यामि'' इति ।

एतावत् उक्त्वा कृष्णः चक्रायुधम् उन्नीय अश्वानां खलीनं परित्यज्य रथात् अवतीर्य भूमौ अतिष्ठत् । चक्रायुधं प्रयोक्तुम् उद्युक्तं कृष्णं भीष्मः शान्तस्वरेण अवदत् -





''आगच्छतु कृष्ण ! भवतः हस्तात् मरणतः मम यशः आदरः च वर्धिष्यते'' इति ।

तदा कृष्णः अवदत् - ''अद्य प्रजानां नाशनं यत् प्रचलति तस्य कारणं भवान् एव । दुर्योधनः यदा वञ्चनया द्यूते मग्नः आसीत् तदा भवता सः न निवारितः, इदानीं च तस्य रक्षणार्थं महान् प्रयासः विधीयते । सः वंशद्रोही भवतः वचनं न पालयति । तथापि किमर्थं सः न परित्यज्यते भवता ?'' इति ।

''राजा तु प्रत्यक्षदेवता खलु ?'' - भीष्मः अवदत् ।

''किं यादवैः कंसः न परित्यक्तः ? यस्य बुद्धिः विपरीता भवति तस्य विनाशः निश्चितः । तादृशस्य त्यागः एव उचितः'' इति अवदत् कृष्णः ।

अत्रान्तरे अर्जुनः रथात् अवतीर्य कृष्णस्य हस्तौ गृहीत्वा अवदत् - ''कृष्ण ! शान्तः भवतु कृपया । भवतः ऋते पाण्डवानां संरक्षकः नास्ति अन्यः । मया यत् प्रतिज्ञातं तत् करिष्यते एव । अहं मित्राणां बन्धूनां सहोदराणां च नाम्ना प्रतिजाने यत् सर्वेषां कौरवाणां नाशनं करिष्यामि एव इति'' इति ।

एतत् श्रुत्वा सन्तुष्टः कृष्णः सुदर्शन-प्रयोगचिन्तनं परित्यज्य प्रतिगत्य रथे उपविष्टवान् । खलीनानि हस्ते गृहीत्वा शङ्खनादं कृतवान् सः । अनन्तरक्षणे एव अर्जुनः घोरं युद्धम् आरब्धवान् । भीष्मः, भूरिश्रवाः, शकुनिः इत्यादयः तस्य बाणैः आहताः अभवन् । अर्जुनस्य बाणानां प्रहारतः बहूनां रथाः विनष्टाः । अश्वगजादयः च व्रणिताः जाताः ।

अचिरात् एव विराटद्रुपदादयः अपि अर्जुनस्य साहाय्यार्थम् आगताः । समग्रं रणरङ्गं शवानां राशिभिः पूर्णं जातम् । रक्तप्रवाहः एव तत्र दृष्टः । अर्जुनः ऐन्द्रास्त्र-प्रयोगं कृत्वा भीष्म-द्रोण-दुर्योधनादीन्, कौरव-पक्षीयान् असङ्ख्यान् सैनिकान् च व्रणितान् कृतवान् । पाण्डवपक्षस्य विजयः घोषितः ।

तस्मिन् दिने अर्जुनः स्वस्य अपूर्वं पराक्रमं प्रदर्श्य कौरवाणां मुखे चिन्तारेखां जनितवान् । युधिष्ठिरः तस्य दिनस्य युद्धस्य समाप्तिं घोषयित्वा शिबिरं प्रतिगतवान् ।

चतुर्थे दिने कौरवसेनाधिपतिः भीष्मः महता क्रोधेन एव रणरङ्गं प्रविष्टवान् । दुर्योधनः, भीष्मः, बाह्लीकः इत्यादयः तम् अनुसृतवन्तः । तस्मिन् दिने पाण्डवसेनायाः

अग्रणीत्वम् अर्जुनः निर्वहन् आसीत् ।

भीष्मार्जुनयोः नायकत्वेन युक्ते कौरव-पाण्डवसैन्ये युद्धस्य आरम्भम् अकुरुताम् । द्रोणः, कृपः, शल्यः, विविंशतिः, दुर्योधनः, अन्ये केचन कौरववीराश्च सम्भूय अर्जुनम् आक्रान्तवन्तः । अत्रान्तरे अभिमन्युः तत्र आगत्य तान् सर्वान् सम्मुखीकृतवान् । अर्जुनाभिमन्युसाहाय्यार्थं धृष्टद्युम्नः अग्रे आगतवान् । सः सांयमनाकमस्य पुत्रं बाणप्रहारेण मारितवान् ।

ततः शल्यः धृष्टद्युम्नस्य सम्मुखी-करणार्थम् आगतः । उभयोः अपि घोरं युद्धं प्रवृत्तम् । घण्टानन्तरम् अभिमन्युः शल्येन सह युद्धम् आरब्धवान् । तदा शल्यस्य साहाय्यार्थम् आगताः दुर्योधनः, दुश्शासनः, दुर्धर्षणः, दुस्सहः, दुर्मुखः, चित्रसेनः इत्यादयः वीराः सम्भूय अभिमन्योः उपरि आक्रमणं कृतवन्तः । तदा भीमः, धृष्टद्युम्नः, उपपाण्डवाः, नकुलः, सहदेवः इत्यादयः अभिमन्योः साहाय्यार्थम् आगताः । उभयोः अपि पक्षयोः घोरं युद्धं प्रवृत्तम् ।

एतस्मिन् युद्धे भीमः गदाम् उन्नीय शल्याभिमुखं गतवान् । एतत् दृष्ट्वा दुर्योधनः गजसेनाम् अग्रे प्रेरितवान् । भीमः सिंहगर्जनं कुर्वन् रथात् अवतीर्य गदां भ्रामयन् गजानां वधम् आरब्धवान् । अन्ये पाण्डवपक्षीयाः वीराः तस्य पृष्ठतः तिष्ठन्तः तस्य साहाय्यं कृतवन्तः । एतस्मिन् युद्धे अनेके गजाः, गजारूढाः वीराः च मारिताः अभवन् ।

सा गजसेना मागधीया । स्वसैन्यस्य नाशनं दृष्ट्वा क्रुद्धः मागधः ऐरावतसदृशं गजम् आरुह्य



अभिमन्युसमीपम् आगतवान् । अभिमन्युः तस्य गजं व्रणितं कृत्वा मागधं बाणप्रहारैः मारितवान् । भीमः तु गदाप्रहारेण निरन्तरं गजसेनां नाशयन् आसीत् । भीमस्य प्रहारात् भीता गजसेना परिवृत्य धावन्ती बहूनां कौरवसैनिकानां मरणस्य कारणं जाता । एताम् उभयविधहानिं रोद्धुं कृताः कौरवाणां सर्वे प्रयत्नाः विफलाः ।

पाण्डववीरेषु अन्यतमः सात्यकिः महता पराक्रमेण युद्धं करोति स्म । तं सम्मुखीकर्तुं कौरवपक्षीयेषु कस्यापि धैर्यं न भवति स्म । अतः सः निरन्तरं कौरवसेनायाः नाशनम् आरब्धवान् । तदा भूरिश्रवाः सात्यकेः पुरतः आगत्य युद्धम् आरब्धवान् । किन्तु अल्पे एव काले सात्यकिः तं व्रणितं कृतवान् ।

अतः भूरिश्रवाः ततः पलायितवान् ।

तस्मिन् दिने भीमस्य शौर्यं सर्वत्र विराजते स्म । सः धृतराष्ट्रपुत्रान् सुषेण-जलसन्ध-वीरबाहु-भीमरथ-सुलोचनादीन् एकैकशः मारितवान् । तदा भीताः अन्ये धृतराष्ट्रपुत्राः भीताः सन्तः रणरङ्गात् पलायितवन्तः ।

एतत् दृश्यं दृष्ट्वा नितरां क्रुद्धः भीष्मः स्वपक्षीयान् महारथिनः आज्ञापितवान् - 'सर्वे सम्भूय भीमम् आक्रामन्तु' इति । एतत् श्रुत्वा नरकासुरपुत्रः भगदत्तः एकं मदोन्मत्तं गजम् आरुह्य भीमस्य दिशि गतवान् । तदा अभिमन्युप्रभृतयः बाणवर्षणेन भगदत्तस्य गमनं निवारितवन्तः । एतदवसरे भगदत्तस्य गजः व्रणितः । तथापि गजम् अग्रे प्रेरयन् भीष्मसमीपं गतः भगदत्तः बाणप्रयोगेण एकेन भीमं विसंज्ञं कृतवान् ।

एतत् दृष्ट्वा क्रुद्धः घटोत्कचः स्वस्य गजम् आरुह्य भगदत्तस्य दिशि गतवान् । भगदत्त-घटोत्कचयोः युद्धे घटोत्कचस्य एव सामर्थ्यम् अधिकं दृष्टम् । कौरवपक्षीयाः चिन्तितवन्तः यत् अद्य भगदत्तस्य मरणं निश्चितम् इति । अतः तस्य साहाय्यार्थं द्रोणदुर्योधनादयः आगताः । घटोत्कचस्य साहाय्यार्थम् अपि पाण्डववीराः आगतवन्तः ।

घटोत्कचस्य युद्धकौशलं दृष्ट्वा भीष्मः द्रोणम् अवदत् - ''एषः वीरः बालकः अपूर्वेण पौरुषेण युद्धं कुर्वन् अस्ति । तस्य रक्षणार्थम् अपि बहवः पाण्डवाः सन्ति । अस्मत्पक्षीयाः सर्वे श्रान्ताः सन्ति । अतः अद्यतनयुद्धस्य समाप्तिं घोषयाम'' इति ।

एषः प्रस्तावः सर्वैः कौरवपक्षीयैः अङ्गीकृतः । अतः घटोत्कचस्य पुरतः स्थिताः वीराः एकैकशः ततः निर्गताः । तदा पाण्डव-पक्षीयाः शङ्खनादं कृत्वा हर्षं प्रकटयन्तः स्वशिबिरं प्रतिगतवन्तः । सर्वेषां निर्गमनस्य अनन्तरं दुर्योधनः स्वभ्रातृणां मरणं संस्मरन् अश्रूणि मोचितवान् ।

सञ्जयस्य मुखात् युद्धस्य समग्रं विवरणं श्रुत्वा धृतराष्ट्रः अवदत् - ''सञ्जय ! युद्धस्य परिणामं चिन्तयतः मम हृदयं कम्पते । मम पुत्राणां पराजयं मरणं वा अहं श्रोतुं सर्वथा न इच्छामि । अतः पाण्डवानां नाशः यथा स्यात्, मम पुत्राणां च विजयः यथा स्यात् तथा कमपि उपायं सूचयतु कृपया'' इति ।





# एषः मम स्वामी न

पूर्वं जयशीलः नाम कृषिकः आसीत् । सः लोभी, निर्दयः च । तस्य गृहे एका कृष्णधेनुः आसीत् । सा एकं सुन्दरं पुत्रं प्रसूतवती । तदा जयशीलः नितरां सन्तुष्टः । किन्तु सः मातुः क्षीरं पातुं तर्णकाय अवसरं न ददाति स्म । तस्याः समग्रं क्षीरं स्वयं दोग्धि स्म । अल्पे एव काले योग्यस्य आहारस्य अभावतः तर्णकः मृतः । जयशीलः धेनुतः अधिकाधिकं क्षीरम् इच्छति स्म । किन्तु धेन्वाः पोषणं न चिन्तयति स्म ।

एकदा रात्रिः आसन्ना चेदपि धेनुः न प्रत्यागता । कस्यापि धेनुः न दृश्यते चेत् अन्वेषणव्यवस्था करणीया आसीत् ग्रामप्रमुखेण । अतः जयशीलः ग्रामप्रमुखं दृष्ट्वा उक्तवान् – 'मम धेनुः न दृश्यते' इति । ग्रामप्रमुखः जयशीलस्य धेन्वाः अन्वेषणार्थं भटान् प्रेषितवान् । ते सायङ्कालाभ्यन्तरे एकां कृष्णधेनुम् आनीतवन्तः ।

''एषा धेनुः किं भवतः ?'' इति अपृच्छत् ग्रामप्रमुखः । 'एषा न मदीया' इति दर्शनमात्रेण अवगतवान् जयशीलः । यतः तदीया धेनुः कृशा आसीत् । एषा तु दृढकाया पुष्टा सुन्दरी च आसीत् । 'एषा मया प्राप्तव्या एव' इति विचिन्त्य जयशीलः अवदत् – ''आम् ! एषा मदीया'' इति ।

ग्रामप्रमुखस्य अनुमतिं प्राप्य जयशीलः तां स्वगृहं नीतवान् । उत्तमा धेनुः प्राप्ता इति सः नितरां सन्तुष्टः आसीत् । तदीयः एषः सन्तोषः दीर्घकालं न अतिष्ठत् । यतः एषा धेनुः क्षीरं न ददाति स्म ।

आत्मना अनुष्ठिता मूर्खता तेन अवगता । किन्तु किं वा कर्तुं शक्नुयात् सः ? ग्रामप्रमुखस्य पुरतः सः स्वयम् अङ्गीकृतवान् आसीत् – एषा मम धेनुः इति । आत्मना उक्तं निराकर्तुम् अशक्नुवन् सः मौनम् आश्रितवान् । अनन्यगतिकः सः धेनुं गृहे तु स्थापितवान् । किन्तु तस्यै योग्यम् आहारं न दत्तवान् । अतः अल्पे एव काले सा

'भामहः'

क्षीणकाया जाता ।

वस्तुतः सा धेनुः रणधीरस्य । यस्मिन् दिने जयशीलस्य धेनुः नष्टा तस्मिन् एव दिने रणधीरस्यापि धेनुः नष्टा । दिनद्वयानन्तरं सः ग्रामप्रमुखं दृष्ट्वा उक्तवान् – 'मम धेनुः न दृश्यते' इति ।

ग्रामप्रमुखेण प्रेषिताः भटाः सर्वत्र अन्विष्य अन्ते जयशीलस्य कृशां धेनुं प्राप्तवन्तः । ताम् एव आनीय ग्रामप्रमुखस्य पुरतः उपस्थापितवन्तः च ।

''एषा धेनुः किं भवतः ?'' इति रणधीरम् अपृच्छत् ग्रामप्रमुखः ।

दर्शनमात्रेण एव रणधीरः ज्ञातवान् यत् एषा धेनुः दुर्बलकाया चेदपि दुग्धदात्री इति । 'योग्यः आहारः दत्तः चेत् एषा अधिकक्षीरं दद्यात्' इति निश्चित्य सः ग्रामप्रमुखम् अवदत् – ''आम् ! मम धेनुः एतादृशी एव आसीत्'' इति ।

ग्रामप्रमुखः उक्तवान् – ''एवं तर्हि एतां नयतु भवान्'' इति । अतः तां गृहं नीत्वा रणधीरः योग्यम् आहारादिकं दत्त्वा प्रीत्या तां पोषितवान् । अल्पे एव काले धेन्वाः आकारः परिवृत्तः । सा पुष्टकाया जाता, अधिकक्षीरं दातुम् अपि उद्युक्ता अभवत् च । नूतनस्य स्वामिनः वात्सल्यपूर्णव्यवहारतः सा सन्तुष्टा आसीत् ।

कानिचन दिनानि अतीतानि । अत्रान्तरे जयशीलः ज्ञातवान् यत् मम क्षीरदात्री धेनुः रणधीरगृहे अस्ति, सा च पुष्टकाया अपि जाता अस्ति इति । अतः सः झटिति रणधीरस्य गृहं गत्वा उक्तवान् – ''मित्र ! प्रमादवशात् भवतः धेनुः मम गृहम् आगता, मम च धेनुः भवतः गृहे अस्ति । अतः कृपया मम धेनुं प्रत्यर्पयतु'' इति ।

''एषा धेनुः ग्रामप्रमुखेण मह्यं दत्ता । अतः यत् वक्तव्यम् अस्ति तत् ग्रामप्रमुखम्



एव वदतु'' इति उक्तवान् रणधीरः ।

जयशीलः ग्रामप्रमुखं दृष्ट्वा उक्तवान् - ''आर्य ! प्रमादवशात् मम रणधीरस्य च धेनू परिवर्तिते जाते । प्रवृत्तः दोषः यदा ज्ञातः तदैव अहं भवत्समीपम् आगतः अस्मि । कृपया मम धेनुं प्रतिदापयतु'' इति ।

ग्रामप्रमुखः जयशीलम् आहूय अपृच्छत् - ''जयशीलस्य वचनं किं सत्यम् ?'' इति ।

तदा जयशीलः अवदत् - ''तेन उच्यमानं सत्यं स्यात् नाम । किन्तु तत्समीपे स्थिता धेनुः दुर्बला अस्थिमात्रकाया च जाता अस्ति । अहम् तु एतां योग्येन आहारेण पोषयित्वा पुष्टकायां कृतवान् अस्मि । अतः यदि जयशीलः स्वसमीपे स्थितां धेनुं पुष्टकायां कुर्यात् तर्हि अहं धेनुपरिवर्तनम् अङ्गीकरिष्यामि'' इति ।

रणधीरस्य कथनं युक्तम् एव इति ग्रामप्रमुखः अवगतवान् । अतः सः जयशीलम् आज्ञापितवान् - 'मासाभ्यन्तरे भवता एषा धेनुः पुष्टकाया करणीया' इति । अनन्यगतिकः जयशीलः गृहं गत्वा स्वगृहे स्थितां धेनुम् उत्तमाहारदानेन सम्यक् पोषितवान् । मासानन्तरं तां ग्रामप्रमुखकार्यालयं प्रति आनीतवान् च । रणधीरः अपि तस्मिन् दिने स्वसमीपे स्थितां धेनुं तत्र आनीतवान् ।

'इदानीं भवान् स्वधेनुं नेतुम् अर्हति' इति जयशीलम् उक्तवान् ग्रामप्रमुखः । एतत् श्रुत्वा सन्तुष्टः जयशीलः पुष्टकायां धेनुं नेतुम् अग्रे गतवान् । किन्तु धेनुः तेन सह गमनं निराकृतवती । जयशीलेन पुनरपि प्रयत्नः कृतः। तथापि धेनुः अग्रे पदं न अस्थापयत् । तदा क्रुद्धः जयशीलः हस्तेन बलात् तां प्रहृतवान् । एतस्मात् क्रुद्धा सा क्रोधेन शृङ्गाभ्यां जयशीलं तुम्फितवती । जयशीलः वेदनया क्रन्दनं कृतवान् ।

तदा ग्रामप्रमुखः निर्णयं श्रावितवान् - ''जयशील ! यद्यपि एषा भवतः स्यात्, तथापि भवतः स्वामित्वं सा न इच्छति इति तु सुस्पष्टम् । भवान् पूर्वं तस्यै योग्यम् आहारं न दत्तवान् । अतः एव सा भवता सह आगमनं निराकृतवती । मासं यावत् भवता इदानीं रणधीरस्य धेन्वाः पोषणं कृतम् । अतः सा भवता सह आगमनम् अङ्गीकुर्यात् । ताम् एव गृहं नीत्वा योग्येन आहारदानेन पोषयतु । यदि सा पुनः पुत्रं प्रसूयेत तर्हि भवता क्षीरं प्राप्येत'' इति ।





THE AMUL CHEESE BOY
IN PICNIC PANIC
One bright sunny day...
...a picnic is in progress.
Little Munnu Verma crawls away.
GURGLE
Suddenly, huge rocks come tumbling down the mountain.
RUMBLE
Amul cheese boy eats an Amul cheese slice...
...and becomes strong and powerful.
He smashes the falling rocks...
BANG
...reducing them to small pieces.
CRACK
Munnu is rescued and back with his family.
All thanks to the cheese that has more milk in it.
Amul cheese slices.
Amul cheese. Yes please!
Amul



परोपकारी समीरः
चन्दमामायाः प्रस्तुतिः
चित्रम् - पाणिः
रामपुरीयाः चोरभयात् पिशाच-भयात् च त्रस्ताः आसन् ।
जनानां भावना आसीत् यत् प्राचीनस्य राजभवनस्य शिथिलभागेषु भूत-पिशाचादयः वसन्ति इति । लुण्ठाकेभ्यः अपि ते भीताः आसन् । ते चोराः हठात् आक्रमणेन ग्रामीणान् लुण्ठयन्ति स्म । एतस्मिन् एव काले समीरः नाम युवकः स्वस्य शूर-नामकेन शुनकेन सह तं ग्रामम् आगत्य पिशाचावासभूते प्राचीनराज-भवने वासम् आरब्धवान् ।
सः ग्रामप्रमुख-समीपं गत्वा उक्तवान् - ''भवद्भिः भूतपिशाचादिभ्यः भेतव्यं नास्ति । यतः तेभ्यः भवतां सर्वेषां रक्षणम् अहं करिष्यामि । एतं विषयं सर्वान् वदतु भवान्'' इति ।
शृण्वन्तु, सर्वे शृण्वन्तु ! अन्धकारप्रसारानन्तरं कोऽपि गृहात् बहिः न आगच्छेत् । समीरः रात्रौ रक्षणं करिष्यति । चोरान् च ग्रहीष्यति ।



समीरः रात्रौ रक्षणकार्यं करोति स्म । रात्रौ ये मार्गे दृश्यन्ते स्म तान् गृहीत्वा भूतावासे बन्धने स्थापयति स्म । प्रातः तान् बन्धमुक्तान् करोति स्म ।
अल्पे एव काले पिशाचभयम् अपगतम् । किन्तु केचन ग्रामवासिनः ग्रामाधिकारिणः पुरतः समीरव्यवहारे दोषम् आरोपितवन्तः ।
किं भवान् सर्वान् सन्देहेन पश्यन् भूतावासे बन्धने स्थापयति ?
आम् । तत्र वासतः जनाः जानन्ति यत् भूत-प्रेतादयः न सन्ति इति । एतस्मात् चोरभयम् अपि दूरं गच्छति ।
अल्पे एव काले चोरभयम् अपि अपगतम् । ग्रामाधिकारी समीरस्य प्रशंसां कृत्वा सम्माननं कृतवान् ।
भवान् सामान्य-चोरेभ्यः अस्मान् रक्षितवान् ।
किन्तु महालुण्ठाकेभ्यः वयं पीडयमानाः स्मः । ततः किम् अस्मान् रक्षेत् भवान् ?
बलरामं लुण्ठाकः कश्चन लुण्ठितवान् अस्ति ।
बलरामस्य पिता मरणसमये उक्तवान् आसीत् - ''धनिकात् किशोरात् ऋणरूपेण स्वीकृतानि चतुस्सहस्रं रूप्यकाणि मया प्रत्यर्पितानि । किन्तु तेन ऋणपत्रं न प्रत्यर्पितम् । ततः तत् अवश्यं प्रतिप्राप्तव्यं भवता'' इति ।


पितुः वचनस्य अनुगुणं बलरामः धनिकसमीपं गत्वा ऋण-पत्रप्रत्यर्पणं प्रार्थितवान् । धनिकः तत् निराकृत्य बलरामस्य गृहं स्वायत्तीकृतवान् ।
यदि एतत् सत्यं तर्हि अहं यथायोग्यं करिष्यामि ।
रात्रौ रक्षण-समये समीरः धनिकस्य गृहस्य भित्तौ महारन्ध्रं निर्मितवान् ।
अनन्तरदिने सः ग्रामाधिकारिणः समीपं गतवान् । धनिकम् अपि तत्र आनायितवान् ।
चोरेभ्यः रक्षयिष्यामि इति भवता उच्यते । किन्तु ह्यः रात्रौ कश्चन चोरः मम गृहस्य भित्तौ महा-रन्ध्रं निर्मितवान् अस्ति ।
एतत् भूतानां कार्यं स्यात्, तु चोरस्य
पिशाचानां कार्यं स्यात् इति केन आधारेण वदति भवान् ?
भूतानाम् आवासे एव खलु अहं वसामि ? हाम्, अन्यः कश्चन विषयः । गोपीनाथस्य पिशाचः भवता मेलितुम् इच्छति ।



अहं तु तेन पिशाचेन न मेलिष्यामि । सः एव मम गृहस्य भित्तौ महारन्ध्रं कृतवान् स्यात् ।
पिशाचेन मेलितुं प्राप्तः अयम् अवसरः न त्यक्तव्यः भवता ।
तस्य नाम्नः श्रवणात् एव मम शरीरं कम्पते !
किमर्थं भीतिः ? किं सः भवद्विषये कुपितः ?
आम् । सः मत्तः ऋण स्वीकृतवान् । प्रत्यर्पितवान् च । किन्तु मया ऋणपत्रं न प्रत्यर्पितम् । तत्पुत्रस्य गृहम् अपि मया स्वायत्तीकृतम् । अतः सः प्रतीकारं साधयितुं प्रयतमानः स्यात् ।
एवं तर्हि भवान् बलरामाय तदीयं गृहं प्रत्यर्पयतु । सहस्रं रूप्यकाणि अपि ददातु । पिशाचम् अहं बोधयिष्यामि ।
धनिकः अधिकारिणः द्वारा ऋणपत्रं अपि प्रत्यर्पितवान् । सहस्रं रूप्यकाणि अपि दत्तवान् ।
अनन्तरदिने समीरः स्व-शुनकेन सह अन्यग्रामं प्रति प्रस्थितवान् ।

# शुभदीपावली

पुनः एकं वर्षम् अतीतम् । नवा दीपावली आगता अस्ति । चन्दमामा सर्वान् वाचकान् दीपावलीशुभाशयान् ज्ञापयति । बालाः ! दीपावलीपर्वणः आचरणविषये योजनां कुर्वन्तः स्युः भवन्तः । कानि वस्तूनि क्रेतव्यानि, कस्य कथम् उपयोगः इति भवद्भिः चिन्तितं स्यात् एव ।

दीपावलीपर्वाचरणं सन्तोषदायकम् अपायरहितं च यथा स्यात् तथा योजना करणीया । तदवसरे किं करणीयं, किं न करणीयम् इति अधः सूचितम् अस्ति । कृपया तद्विषये अवधानवन्तः भवन्तु -

## *प्रथमा आवली* - **अवधातव्याः अंशाः**

- ✔ स्फोटकानां स्फोटनसमये भवत्समीपे ज्येष्ठाः अवश्यं भवन्तु ।
- ✔ स्फोटकस्फोटनसमये सर्वदा पादरक्षा ध्रियताम् । पादरक्षां विना अटनम् अपायकरम् । नक्षत्रशलाकायाः ज्वालनानन्तरं क्षिप्ता उष्णा अयःशलाका पादं तापयेत् ।
- ✔ स्फोटकानाम् उद्दीपनार्थम् गन्धवर्तिकायाः उपयोगः वरं, न तु अग्निशलाकायाः ।
- ✔ उपयुक्तस्फोटकजनिताः अवकराः कोणे क्वचित् राशीकृताः भवन्तु । तेषु स्थितम् अग्निं निवारयितुं जलपातनं वरम् ।
- ✔ स्फोटकस्फोटनस्थले जलद्रोणी हस्तलभ्या भवतु ।
- ✔ भवता प्रेषितानि राकेटादीनि स्फोटकानि कस्यापि तृणमयगृहस्य सङ्ग्रहालयस्य वा नाशनं यथा न कुर्युः तथा जागरूकता भवतु । भवतः आनन्दः अन्यस्य दुःखाय न भवेत् ।

## *द्वितीया आवली* - **अकरणीयानि कृत्यानि**

- ✗ स्फोटकस्फोटनसमये अग्निशलाकायाः उपयोगः मास्तु । गन्धवर्तिकायाः उपयोगः भवतु ।
- ✗ स्फोटितस्फोटकानाम् इतस्ततः पातनं मास्तु । सर्वदा कोणे क्वचित् सङ्ग्रहः भवतु ।
- ✗ स्फोटनसमये टेरिकाट्वस्त्रस्य उपयोगः अपायकरः । कार्पासवस्त्राणाम् उपयोगः वरम् ।
- ✗ गृहस्य अन्तः स्फोटकस्य स्फोटनम् अपायकरम् । विशाले अङ्गणे स्फोटनम् अपायरहितम् ।
- ✗ अनावृत-फ्यूज्पेटिकायाः समीपे स्फोटनात् अपायः सम्भाव्यते । अतः स्फोटनसमये फ्यूज्पेटिकायाः द्वारं पिधातव्यम् ।
- ✗ मृत्तैल-शिलातैलादीनाम् इन्धनानां स्थापनं यत्र, यत्र च यानानि स्थापितानि भवन्ति, तत्र स्फोटनम् अपायकरम् ।
- ✗ शरीरम् अवनमय्य स्फोटकस्फोटनतः अपायः सम्भाव्यते । हस्तमात्रम् अवनमय्य स्फोटनात्, मुखनेत्रादयः अपायग्रस्ताः न स्युः ।



# दाहव्रणस्य प्राथमिकचिकित्सा

दीपावलीसमये काश्चन दुर्घटनाः सम्भवन्ति एव । अग्निदाहः एतासु अन्यतमः । अग्निदाहः महान्तं घोरं दुष्परिणामं जनयति क्वचित् । भवतां तादृशः दाहः मा भवतु इत्येव अस्माकम् आशंसनम् । तथापि दाहसमये अनुसरणीयान् उपायान् कांश्चन वयम् अत्र निरूपयामः ।

दाहस्थानं शीतलजलेन प्रवहज्जलेन वा आदौ क्षालनीयम् । तापः यावत् न्यूनः न भवति तावत् जलं पातनीयम् । हिमखण्डस्य, हिमशीतलजलस्य वा उपयोगः सर्वथा मास्तु ।

उरसि, उदरस्य अधोभागे वा दाहः जातः चेत् वस्त्रस्य अपनयनार्थं प्रयासः मास्तु । तादृशः प्रयासः अधिकहानिकारकः स्यात् । अतः दाहस्थले जलपातनमात्रं पर्याप्तम् ।

दाहस्थले अङ्गुलीयकं, सुवर्णहारः, अन्यविधानि आभरणानि च पीडाकारकाणि स्युः । तानि अपनयन्तु ।

दाहस्थले कदापि तैलम् अन्यविधं स्नेहंशयुक्तद्रव्यं वा मा लेपयन्तु । यतः व्रणस्थलस्य स्वच्छीकरणे पट्टिकाबन्धने वा क्लेशः भवेत् ।

दाहव्रणस्थले चर्मणः कृष्णवर्णावरणम् उत्पद्यते । तत् मा अपनयन्तु । तत् रोगान्तरकीटप्रवेशं निवारयति ।

यदि नेत्रे अग्निकणप्रवेशः स्यात् तर्हि वेदनासमाप्तिं यावत् क्षालनं क्रियताम् ।

सर्वविधदाहव्रणाः पट्टिकाबन्धं न अपेक्षन्ते । क्वचित् लेप्यलेपनम् अपि पर्याप्तम् । गभीरव्रणाः यत्र, तत्रैव पट्टिकाबन्धनम् आवश्यकं भवति ।

उपर्युक्तसूचनाः कदापि न विस्मर्तव्याः । चिकित्सायां विलम्बः न स्यात् । दाहसमनन्तरम् एव परिवारवैद्यस्य सम्पर्कः करणीयः ।

'प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम्' इति वचनं भवद्भिः ज्ञायते एव । अतः दाहः एव यथा न भवेत् तथा जागरणं वरम् । अतः स्फोटक-स्फोटसमये जागरूकता भवतु । दीपावली सदा मधुरस्मृतिम् एव स्मारयतु, न तु कामपि दुर्घटनाम् इति पुनरपि आशास्महे वयम् ।

*दीपावलीशुभाशयाः ।*



# प्रभूतं सुवर्णम्

माल्यपुरे रामदासः नाम सज्जनः निवसति स्म । तस्य उभौ पुत्रौ । कदाचित् तस्य पत्नी व्याधिं प्राप्य परलोकं श्रितवती । एतया विपत्त्या रामदासः दिग्भ्रान्तः । बालकौ एतौ पुत्रौ कथं पोषणीयौ इति तेन महती चिन्ता प्राप्ता । अन्ते सः निर्णीतवान् यत् एतौ मातुलग्रामे स्थापनीयौ इति ।

तस्य श्यालस्य ग्रामः दूरे आसीत् । तं ग्रामं प्रति निर्गमनात् पूर्वं सः सुवर्णनाणकानां ग्रन्थिं, पत्न्याः सुवर्णाभरणानि च धनपति-नामकाय दत्त्वा उक्तवान् - ''मान्यवर ! एतानि आभरणानि धनं च कानिचन दिनानि सुरक्षिततया स्थापनीयानि भवता'' इति ।

''मम गृहे स्थापितानि आभरणादीनि सुरक्षिततया तिष्ठन्ति एव । अतः कापि चिन्ता मास्तु भवतः'' इति उक्तवान् धनपतिः ।

धनपतेः वचनानि मधुराणि । किन्तु तस्य व्यवहारः तु कपटतापूर्णः । केषाञ्चित् मासानाम् अनन्तरं रामदासः आभरणादीनि प्रतिप्राप्तुं यदा आगतः तदा धनपतिः कृत्रिमाभरणाद्युपेतां पेटिकां दत्तवान् । रामदासः एतां वञ्चनां झटिति ज्ञातवान् । किन्तु धनिकस्य विरोधं कर्तुं तस्य धैर्यं सामर्थ्यं वा न आसीत् । अतः सः श्यालगृहं गत्वा धनपतिना कृतं विश्वासघातं पुत्रौ उक्तवान् । अल्पे एव काले चिन्तारोगग्रस्तः सन् सः परलोकं श्रितवान् च ।

कानिचन वर्षाणि अतीतानि । रामदासस्य पुत्रौ योग्यं विद्याभ्यासं कृत्वा सुवर्णवाणिज्ये उद्युक्तौ जातौ । दैवम् अनुकूलकरम् आसीत् । अतः तौ अल्पे एव काले प्रभूतं धनं सम्पादितवन्तौ । किन्तु ताभ्यां धनपतेः विश्वासघातकता न विस्मृता । अतः तौ माल्यपुरं प्रति प्रस्थितवन्तौ ।

तयोः ज्येष्ठः दीर्घं श्मश्रु संन्यासिवेषं च धृत्वा माल्यपुरात् बहिः जीर्णमन्दिरे वासम् आरब्धवान् । कनिष्ठः राजकुमारवेषं धृत्वा धनपतेः गृहस्य पुरतः स्थितं गृहं भाटकरूपेण

स्वीकृत्य सेवकैः सह वासम् आरब्धवान् । सः तत्र वैभवोपेतजीवनं कुर्वन् प्रभूतं दानम् अपि करोति स्म । अल्पे एव काले धनपतेः अवधानम् आकृष्टं तेन ।

'एषः कीदृशः विलक्षणः पुरुषः ! बीजानि इव धनं सर्वेभ्यः वितरति खलु अयम् ! यत् पेटिकासु सुरक्षिततया स्थापनीयं तत् धनम् अयं जलम् इव व्ययीकरोति' इति अचिन्तयत् धनपतिः । सः राजकुमारेण मिलित्वा तस्य प्रशंसां कृतवान् । राजकुमारः सुप्रीतः सन् तस्मै उपायनानि दत्तवान् । तयोः मैत्री स्थापिता अभवत् ।

एकदा रात्रौ राजकुमारः उच्चैः अघोषयत् - 'चोरः, चोरः' इति । प्रतिवेशिनः धावन्तः आगतवन्तः । राजकुमारः अवदत् - ''केचन चोराः मम शयनप्रकोष्ठं प्रविश्य सुवर्णैः पूर्णाः पेटिकाः अपहर्तुं प्रयत्नं कृतवन्तः । तावता जागरितः अहम् आक्रोशनं कृतवान् । चोराः पलायितवन्तः'' इति ।

तदा तत्रैव स्थितः धनपतिः अवदत् - ''राजकुमारवर्य ! असुरक्षिते एतस्मिन् गृहे भवतः वासः न युक्तः । अहं भवतः सुहृत् अस्मि । अतः भवान् मम गृहे एव वसतु । सुरक्षाविषये तत्र न काऽपि चिन्ता'' इति ।

राजकुमारः एतं प्रस्तावम् अङ्गीकृतवान् । भारयुक्ताः सुवर्णपेटिकाः धनपतेः गृहं प्रति नीताः । राजकुमारस्य वासार्थं धनपतिः विशालं प्रकोष्ठं दत्तवान् । तत्रैव ताः पेटिकाः अपि स्थापिताः । अतिथेः वैभवोपेतं जीवनं धनपतौ आश्चर्यं जनयति स्म । एतस्य सम्पत्तिः कथञ्चित् मया स्वायत्तीकरणीया एव इति



सः सङ्कल्पितवान् । एतदर्थम् उपायं सदा चिन्तयति स्म तदीयं मनः ।

कदाचित् धनपतिः राजकुमारस्य सेवकानां द्वारा ज्ञातवान् यत् राजकुमारः अस्वस्थः अस्ति, अस्वास्थ्यकारणतः भोजनं सम्यक् न सेवते इति । एकदा राजकुमारः धनपतिम् आहूय मन्दस्वरेण उक्तवान् - ''मम स्वप्ने देवः प्रत्यक्षीभूय आदिष्टवान् यत् मदीया सम्पत्तिः ग्रामसीमायां स्थिते जीर्णमन्दिरे निवसते संन्यासिने दातव्या इति । किं भवान् तम् आनाययितुं शक्नुयात् ?'' इति ।

धनपतिः श्रुतवान् आसीत् यत् जीर्ण-मन्दिरवासी संन्यासी प्रातः सायं च एकेन पादेन स्थित्वा तपः करोति, भक्ताः यद्यत् यच्छन्ति तत्सर्वं निर्धनेभ्यः ददाति इति ।



धनपतिः तस्य संन्यासिनः समीपं गत्वा विनयेन प्रार्थितवान् यत् आसन्नमरणस्य राजकुमारस्य अन्तिमा इच्छा पूरणीया इति ।

''तस्य इच्छायाः पूरणे मम न काऽपि आपत्तिः । समस्या नाम मया सुवर्णस्य मूल्यं न ज्ञायते । अन्यच्च एतस्मिन् जीर्णे मन्दिरे सुवर्णस्य स्थापनम् उचितं न स्यात्'' इति उक्तवान् संन्यासी ।

''तद्विषये अलं चिन्तया । अहं सुवर्णस्य मूल्यं जानामि । आवश्यकतायाम् आपतितायाम् अहं सुवर्णविक्रयणे साहाय्यं करिष्यामि । सुवर्णरक्षणविषये अपि साहाय्यं करिष्यामि । तत् ममैव गृहे तिष्ठतु । भवान् अपि मम गृहे वसतु'' इति कृत्रिमविनयेन प्रार्थितवान् धनपतिः । संन्यासी एतं प्रस्तावम् अङ्गीकृत्य ततः प्रस्थितवान् । राजकुमारस्य सुवर्णसम्पत्तिः सङ्कोचेन एव स्वीकृता तेन । राजकुमारः आशीर्वादेन अनुगृहीतः चापि ।

आश्चर्यं नाम संन्यासिनः आशीर्वादबलात् राजकुमारः स्वस्थः जातः । संन्यासी सः च प्रतिदिनं रुचिकरम् आहारं सेवमानौ धनपति-गृहे वसतः स्म । धनव्ययः तु धनपतेः ।

केषाञ्चित् दिनानाम् अनन्तरं राजकुमारः प्रतिगमनं चिन्तितवान् । 'मया सह भवान् अपि आगच्छतु' इति संन्यासिनम् उक्तवान् सः । ''सुवर्णविक्रयणव्यवस्थाम् अकृत्वा अहं भवता सह आगन्तुं कथं शक्नुयाम् ?'' इति अपृच्छत् संन्यासी ।

तदा धनपतिः अवदत् - ''संन्यासी भवान् सुवर्णमूल्यं विचार्य क्रेतारम् अन्विष्य व्यवहारं निर्वर्तयितुं महान्तं क्लेशम् अनुभवेत् । अतः यदि भवतः अनुज्ञा स्यात् तर्हि अहम् एव तानि सुवर्णानि क्रीणीयाम्'' इति ।

''भवान् श्रेष्ठः दयालुः भक्तः'' इति मन्दहासपूर्वकम् अवदत् संन्यासी ।

धनपतिः स्वस्य इष्टं सिद्धं मत्वा नितरां सन्तुष्टः । सुवर्णस्य वास्तविकं यत् मूल्यं तस्य दशमांशमात्रं सः संन्यासिने दत्तवान् । तदेव प्रभूतम् आसीत् । अतः धनदानानन्तरं धनपतेः गृहे किमपि धनं न अवशिष्टम् । 'प्रभूतलाभांशः मया प्राप्यते' इति चिन्तयन् आसीत् धनपतिः ।

ततः घण्टाभ्यन्तरे संन्यासी राजकुमारश्च निर्गतवन्तौ । धनपतिः सुवर्णस्य एकं फलकं स्वीकृत्य स्वर्णकारसमीपं गतवान् ।

''किम् एतत् सुवर्णं मत्वा भवता अत्र

आनीतम् ! ह..हा..। काचकं किं, मणिः कः इत्यपि न ज्ञायते भवता । ह.. हा...। भवता एतत् अन्यतः क्रीतं चेत् नितरां वञ्चितः भवान्'' इति अवदत् स्वर्णकारः ।

इदानीं धनपतिः दिग्भ्रान्तः । समग्रां सम्पत्तिं व्ययीकृत्य यत् क्रीतं तत् कृत्रिम-सुवर्णम् ! महती वञ्चना ! संन्यासी राज-कुमारश्च तं लुण्ठितवन्तौ आस्ताम् ।

धनपतिः तस्मिन् एव दिने राजसमीपं गत्वा प्रवृत्तं सर्वं निवेदितवान् । राजा राजकुमारस्य संन्यासिनः च अन्वेषणार्थं भटान् प्रेषितवान् । तौ नगरे एव आस्ताम् । विना विरोधं तौ राजास्थानम् आगतवन्तौ ।

विचारणा आरब्धा । तदा राजकुमारः उक्तवान् - ''मया सुवर्णं न विक्रीतम् । संन्यासी मम प्राणान् रक्षितवान् इत्यतः मया उपायनीकृतं तत् । मम दानानन्तरं तत् संन्यासिनः जातम् । अतः एतस्मिन् व्यवहारे मम न कोऽपि सम्बन्धः'' इति ।

राजा राजकुमारस्य वचनं युक्तियुक्तम् अमन्यत ।

''अहं धनपतिम् आदौ एव उक्तवान् आसं यत् मम दृष्ट्या सुवर्ण-शिलाखण्डयोः न कोऽपि भेदः इति । सुवर्णमूल्यं न ज्ञायते मया इत्यपि उक्तम् आसीत् मया । सुवर्णस्य कृत्रिमता अकृत्रिमता वा अपि मया न ज्ञायते । धनपतिः एव मूल्यनिश्चयं कृत्वा धनं दत्तवान् । तेन दत्तं धनं दरिद्रेभ्यः वितीर्णं मया'' इति उक्तवान् संन्यासी ।

राजा संन्यासिनः कथनम् अपि युक्ति-सम्मतम् अभावयत् । अन्ते सः स्वस्य निर्णयम् अश्रावयत् - ''धनपतिवर्य ! एतस्मिन् व्यवहारे अहं किमपि कर्तुं न शक्नोमि । विलक्षणः व्यवहारः एषः । दान-रूपेण दत्तस्य वस्तुनः विषये राजकुमारे उत्तर-दायित्वारोपणं न युक्तम् । भवता मूल्यं स्वयं निश्चितं, धनं च दत्तम् इत्यतः संन्यासी अपि दोषभाक् भवितुं न अर्हति अत्र । मूल्य-निश्चयात् क्रयणाच्च पूर्वं वस्तुनः परीक्षणं भवतः दायित्वम् आसीत् । तत् भवता न निरूढम् । अतः दोषः भवतः एव । स्वदोषस्य फलं भवता एव वोढव्यम्'' इति ।

संन्यासि-राजकुमार-वेषधारिणौ तौ युवकौ राज्ञे कृतज्ञतां समर्प्य ततः निर्गतवन्तौ ।





# चित्रशीर्षिका-स्पर्धा

अधस्तनचित्रद्वयं दृष्ट्वा परस्परसम्बन्धिवाक्यद्वयेन चित्रशीर्षिकां किं भवन्तः प्रेषयितुं शक्नुयुः ?
समपत्रे लिखिता चित्रशीर्षिका अधस्तनसङ्केताय प्रेषणीया -
**चन्दमामा** (संस्कृतम्) 'अक्षरम्' ८ उपमार्गः, गिरिनगरम्, बेङ्गलूरु - ५६००८५





युक्ता शीर्षिका अक्टोबर् - २५ तः पूर्वं प्रेषणीया । सर्वश्रेष्ठायै शीर्षिकायै रू.१००/- पुरस्काररूपेण दास्यन्ते । पुरस्कृता शीर्षिका द्विसहस्रतमवर्षस्य डिसेम्बर्मासे प्रकाशयिष्यते ।

## अभिनन्दनानि



**'अगस्द्'मासीयस्पर्धाशीर्षिकाप्रेषकः-**

**एस्. कार्तिकशिव**

s/o के. सायिकुमार, 'कुमारविजयम्'
जैनगरम्, अरुब्बाकम्, चेन्नै - ६०० १०६



*प्रथमचित्रम्* - **जलपूरम् इत्थम् ।**
*द्वितीयचित्रम्* - **पात्रप्रक्षालनं कथम् ?**

ofm

# RUCHI RICE

WITH ITALIAN & SOUTH KOREAN KNOW-HOW

## new sensation in Asia

**RICE MADE FROM PURE WHEAT**

**100% VEG. LOW FAT**

### HOW TO PREPARE

**RUCHI VEG. RICE** — **Serve : 4-6 persons**

INGREDIENTS : Ruchi Rice - 200 gms., Oil - 50 gms., Beans -100 gms.,Carrot - 50 gms., Onion - 50 gms.,Tomato -50 gms., Green Chilies - 2., Black Pepper 1/2 tsp., Water - 400 gm.,Salt - 1 tsp.

PREPARATION : Fry Ruchi Rice on low flame until half boiled, after 10 min. wash in cold water, see that rice granules remain separate. Dry up the rice in an open space, keeping ready for cooking. Heat oil in a deckhi or pan. Add chopped onions, green chilies and fry. Then add beans, carrots, tomato pieces and salt to taste. Fry upto 2 minutes. Add warm water as required and cover it. Ensure the rice is cooked up properly and is soft, then add black pepper powder and serve hot.




**You can also prepare Biriyani, Curd Rice, Upma, Halwa, Kheer etc.**

**OUR OTHER VERMICELLI PRODUCTS**

- Star Vermicelli ◆ Rice Vermicelli ◆ Stelline Vermicelli
- Funghetti Vermicelli ◆ Penne Vermicelli ◆ Fusilli Vermicelli ◆ Macaroni

**WHEAT RICE BEST RICE RUCHI RICE**

**RUCHI RICE**

- TASTY
- NUTRITIOUS
- EASY TO COOK

- DON'T WASH
- FRY LIGHTLY
- BOIL FOR 5 MINUTES

**OM OIL & FLOUR MILLS LTD.**

Type II/8, Industrial Estate , Cuttack. Tel.: ( 0671 ) 341320 / 344439, Fax.: 344538
e-mail : ruchis@cal2.vsnl.net.in, website- www.ruchispices.com

A quality product of Om Oil & Flour Mills Ltd. Makers of Ruchi Spices.
Winner of Spice House Certificate.

Spice House

AVAILABLE AT ALL LEADING SHOPS. DEALERS ENQUIRIES SOLICITED.

Samperk/2000